श्रीस्वामि... ...माला‌याः

चतुर्थं पुष्पम्

# आयुर्वेदीयपदार्थविज्ञानम्

पं० श्री बलवन्तशर्मणा सम्पादितम्

तेनैव

निर्मितया टिप्पण्या हिन्दीभाषया च विभूषितम्

श्रीस्वामि-लक्ष्मीरामट्रस्टमन्त्रिणा प्रकाशितम्

सं० २००७, सन् १९५० ई०

प्रथमावृत्तिः

मूल्यं रूप्यकचतुष्टयम्

❀ श्रीः ❀

# प्रकाशकस्य विज्ञप्तिः

जयपुरराज्ये एव किम्, भारतमात्रेऽपि सुप्रसिद्धैश्चिकित्सकचूडामणिभिर्दादूपथपरिव्राजकैः आयुर्वेदमार्तण्डश्रीलक्ष्मीरामस्वामिमहाभागैः १९८१ तमविक्रमवत्सरस्य विजयदशम्याम् [अक्टूबर मासस्य १० तारिका १९३२ खि० सं०] निरीक्षकसंघ (ट्रस्ट) मेकं नियतीकृत्य दशसहस्राधिकलक्षानुमितमुद्राणां राजतन्त्ररक्षितधनम् (गवर्नमेण्ट सैक्युरिटीज्), पादोनलक्षद्वयमुद्राणां गृहारामादिकं च तस्याधिकारे स्थापितमभूत्। राजतन्त्ररक्षितधनस्य वार्षिकवृद्धिः (व्याज) गृहारामादीनां भाटकं (भाड़ा) च प्रतिवर्षं सप्तसहस्रमुद्रा (७०००) मितं भवति। स्वामिमहाभागानामिच्छाऽनुसारम्, औषधालयआतुरालय विद्यालयादीनां संरक्षणे निर्धनविद्यार्थिनां वृत्तिप्रदानादिना साहाय्यसम्पादने, दादूसम्प्रदायसम्बन्धिनामायुर्वेदविषयकाणां ग्रन्थानां च प्रकाशनादिषु, अनेकविधधर्मकार्येषु विद्योन्नतिकार्येषु च तदेतस्याऽऽयस्य विनियोगः स्यात्।

श्रीमद्भिः स्वामिमहाभागैरायुर्वेदद्वारैव धनमिदमुपार्जितमासीत्। अत एव आयुर्वेदस्योन्नतिः स्वामिमहाभागानां विशिष्य लक्ष्यमभूत्। सङ्घेनाऽधिकृते निधि-(फण्ड) धने विंशतिसहस्रमुद्राः स्वामिमहोदयैरेतदुद्देश्येन पृथङ्नियमिताः यदेतस्य निधेः वृद्धि (व्याज) द्रव्येण आयुर्वेदसम्बन्धिनवीनपुस्तकनिर्मातृभ्यो विद्वद्भ्यः पुरस्कारविधया धनसाहाय्यं दीयेत। प्राचीनाऽर्वाचीनानां च मुद्रिताऽमुद्रितानां च आयुर्वेदग्रन्थानां प्रकाशनं चानेन क्रियेतेति। अनेनैव निधिद्रव्येण 'आयुर्वेदीयपदार्थविज्ञान' नामकोऽयं ग्रन्थो मुद्रयित्वा विद्यानुरागिणां सेवायां समुपस्थाप्यते।

समर्थैर्महर्षिभिः प्रवर्तितः सोयमायुर्वेदः प्रतिपदं दार्शनिकैर्विषयैरभिव्याप्तः। अत्र हि स्थाने स्थाने प्रसङ्गतो दार्शनिकपदार्थानां प्रतिपादनं प्राप्यते। किन्तु एतावतामायुर्वेदग्रन्थानां सर्वतः पाठ्यक्रमादिषु परिगृहीतत्वेऽपि आयुर्वेदीयपदार्थानां पृथक्परिज्ञानाय नैकोपि प्रकरणग्रन्थः समुपलभ्यते। चरकचतुराननश्चक्रपाणिरपि यत्र-तत्र विकीर्णान् तादृशपदार्थान् व्यावर्णयति।

अतएव हि वर्तमानकालिकेऽ आयुर्वेदीयपाठ्यक्रमे आयुर्वेदीयपदार्थविज्ञान-पुस्तकाऽभावकृता भूयसी त्रुटिरनुभूयते स्म शिक्षामार्मिकैः। एनमभावमभिलक्ष्य आयुर्वेदमार्तण्डश्रीयादवजी त्रिविक्रमजी आचार्यमहाभागैरभिप्रेरिताः भुजकच्छनिवासिनः पण्डितश्रीबलवन्तशर्ममहोदया महता श्रमेण आयुर्वेदीय-पदार्थविज्ञाननामकमिममभिनवं ग्रन्थं प्रणीतवन्तः। पदार्थविज्ञानस्यास्य मूलग्रन्थस्य स्पष्टप्रतिपत्तये तैरेव महाभागैर्विस्तृता टिप्पणी चापि संग्रथिता। ततो वर्तमान-काले लोकानां भूयसीमावश्यकतामनुभूय मूलकारिकाणामासां विस्तृता हिन्दी-टीका चापि तैरेव निबद्धेति मन्ये आयुर्वेदीयपदार्थजिज्ञासूनां कृते भूयसी सुविधा सेयं सम्भवेत्।

यादवजी त्रिविक्रमजी महोदयाः स्वामिमहाभागानां परमप्रियाः सुहृदः। 'ट्रस्ट' पत्रे स्वामिमहोदयैस्तदिदं विशिष्याभिलिखितं यद् यावज्जीवं श्री यादवजी त्रिविक्रमजी महोदयानामनुमत्यैव ग्रन्थाः प्रकाश्येरन्। प्रकृतग्रन्थेऽस्मिन् न केवलं तेषामनुमतिरेव, प्रत्युत ग्रन्थस्यास्य निर्माणे प्रचारणे चापि त एवाचार्य-महाभागाः प्रधानतयाऽभिप्रेरकाः। अतएव ग्रन्थस्यास्य प्रकाशने श्रेयो भूयस्तरमाचार्यमहाभागस्यैवेति हृदयस्यान्तस्तलेनाऽभिनन्देयुर्मार्मिकमहाभागाः। तत एव तेभ्यो धन्यवादप्रदानैरात्मनः कृतज्ञताम्प्रकाशयन्तोऽस्माभिः श्री स्वामि-लक्ष्मीरामनिधिग्रन्थमालायाः चतुर्थं कुसुमम् 'आयुर्वेदीयपदार्थविज्ञाना'भिधानो-ऽयं ग्रन्थो वैद्यमहाभागानां समक्षमुपस्थाप्यते। वर्तमानकाले बहुतरमपेक्षितं विषयविवेचनमनुरुध्य मार्मिकाः वैद्यमहाभागा ग्रन्थमिमं भूयस्तरामाद्रियेरन्निति हृदयेन विश्वसिमः। आयुर्वेदीयपाठ्यक्रमोपयुक्तानां ग्रन्थानां प्रणयनदिशायां सोयमारम्भो नूतनान् ग्रन्थलेखकमहोदयान् बहुतरं समुत्साहयेत्। निरीक्षक-सङ्घस्योत्साहसम्वर्द्धनाय, स्वामिमहाभागानामुद्देश्यपूर्तये च सोयमुपक्रमः प्रकामं प्रभवेदिति भूतभावनं भगवन्तं भूयो भूयोभिप्रार्थयामहे।

इति विदुषां विधेयः

गणगौरी बाजार
विजयदशमी ता० २०-१०-५०

श्यामसुन्दर शर्मा—
स्वामिलक्ष्मीरामट्रस्टमन्त्री
जयपुरम्।

—: अत्रैषतु प्रास्ताविकम् :—

आयुर्वेदो हि नाम निखिलजनताजीवातुभूतमलौकिकं प्रत्यक्षशास्त्रं—"मन्त्रायुर्वेदवच्च प्रामाण्यम्" इति श्रुत्या श्रुतेरपि सद्भावे प्रमाणत्वेनोपन्यस्यतेऽनादिकालतः। कालक्रमेण भारते वैदेशिकानां घातप्रतिघातैर्निरन्तरं क्षीयमाणा भारतीया संस्कृतिर्विद्यमानापूर्णग्रन्थेषु पात्रान्तरसञ्चार्यमाणं परिक्षीणं मधिवत्र यथा कथञ्चित्तपोनिष्ठैररण्यवासिभिर्ज्ञानैकमात्रसारैर्मुनिसद्दृशैरस्मत्पूर्वजैः प्रवर्तिता कृच्छ्रेष्वपि काले शिष्यपरम्परातः सम्प्राप्तविभवाद्युनापि राजते स्वकीयापरिवर्तनीयदृढसिद्धान्तसञ्चयरूपेणोपलभ्यमानसंहितासु प्रकटितनिजस्वरूपा। जयन्ति ते सुकृतिनो मुनयः यत्प्रातिभरसासिक्तो ह्यायुर्वेदकल्पतरुरद्यापि फलति।

परमाधुनिके काले न तादृशी प्रतिभा प्रतिभाति विद्यार्थिषु, अध्यापकेषु, वैद्यवरेषु, चिकित्साकर्म कुर्वत्सु वा, येन सूत्ररूपेण वर्तमानेषु ग्रन्थेषु स्वप्रातिभप्रकाशनिकषेणोल्लीढबुद्धयस्ते स्वकीयक्षेत्रेषु यशस्विनो भवेयुः। एषा हि परिपाटी प्राचीनासीद्यया "अनुक्तमप्यूहति पण्डितो जनः" इति वादः प्राचलत्। सत्वप्रणिधानालोकोज्ज्वलेषु तेषां मनस्सु प्रतिक्षणं जागरूकासीत् सा शक्तिः, यस्या अवलम्बनेन सूत्ररूपेणोक्तमपि सम्यगधिगतवन्तो, व्याख्यानयन्तः शास्त्रवचनानि, अपरबुद्धौ संक्रामयन्तश्च तानि, सुखं लोकयात्रां वाहयन्तोऽधिशेरते स्म।

काले हि तस्मिन्नध्यापनशैल्यपि छात्रहृदयेषु तत्वजिज्ञासाबीजवपनं कुर्वती, प्रसिञ्चन्ती च युक्तियुक्तोत्तरसलिलम्, विवर्धयन्ती च समधिगतसकलरहस्यफलभारनम्रान् विनम्रानन्तेवासिकल्पद्रुमान्, विशिखानुप्रवेशे रोगार्तजनोल्लाघतासंविधौ कल्पद्रुवत्प्रेष्ठदान्समुज्जुघोष। श्रीमद्भगवद्गीतायामपि सफलोपदेशभूमेरर्जुनस्य भगवन्तं श्रीकृष्णं प्रति तत्वजिज्ञासाप्रकाशकानि प्रश्नवचांसि भगवता व्यासे-

नोपनिबद्धानि। आयुर्वेदकृतास्वपि प्रणालिकयानया रचना समुपनिबद्धा। यथाहि चरके तन्त्रकारः स्वयमपि सम्यक् शास्त्रार्थमवबोद्धुम् षट्त्रिंशत्तन्त्रयुक्तीः प्रदर्श्य, विज्ञापयति ताः। यथा—

यथाम्बुजवनस्यार्कः प्रदीपो वेश्मनो यथा।
प्रबोधनप्रकाशार्थास्तथा तन्त्रस्य युक्तयः॥
एकस्मिन्नपि यस्येह शास्त्रे लब्धास्पदा मतिः।
स शास्त्रमन्यदप्याशु युक्तिज्ञत्वात्प्रबुध्यते॥
अधीयानोऽपि शास्त्राणि तन्त्रयुक्त्या विना भिषक्।
नाधिगच्छति शास्त्रार्थानर्थान् भाग्यक्षये यथा॥

किञ्च—तदानीन्तना अन्तेवासिनश्चापि गुरुकुलेषु केवलं विद्याव्यसनिनो, दिवानिशं ब्रह्मसत्रदीक्षिताः, अध्ययनाध्यापनरता न केवलं मूलोल्लापनरता उतोहापोहेन निश्चितं सिद्धान्तजातमपि सम्यक्परिज्ञाय यथामति लेखबद्धं कुर्वाणा गुरुचरणैरुपदिष्टपथेन पृथक् पृथक् स्वतन्त्राणि विरचयामासुः। प्रसङ्गोपात्ततया चरके लिखितमुदाहरामि—

बुद्धेर्विशेषस्तत्रासीन्नोपदेशान्तरं मुनेः।
तन्त्रस्य कर्ता प्रथममग्निवेशो यतोऽभवत्॥

अतएव सम्प्रति यानि तन्त्राणि समुपलभ्यन्ते महर्षिरूपैर्वैज्ञानिकैः प्रत्यक्षदर्शनेन भूयोऽनुमानज्ञेयभावविमर्शसम्वलितेन मनसा च सुबहु परिश्रम्य लिखितानि, तद्धि एकान्ततः पूर्णगवेषणायाः फलितम्। येन न काप्यस्पृष्टा स्यात्कष्टकल्पना विधातुः प्रत्यक्षदृश्यविषयेषु मानवैरिति प्रत्याययन्तीव "पदे पदे यन्नवतामुपैति तदेव रूपं रमणीयतायाः" इति कस्यचन सहृदयस्य वचोभङ्गीपरिलक्षिता चमत्कृतिराविर्भवति तत्तद्विषये।

परं साम्प्रतिकाः स्वयमध्येतुमशक्नुवानाश्छात्रास्तत्तेषां विषयाणां लक्षीं परिचयमात्रवक्तृतामध्यापकमुखेभ्यः श्रोतुं समीहन्ते। यः खलु विद्वानध्यापको विचिन्त्य तेभ्यः शास्त्रेभ्योऽतिसंक्षिप्तां वक्तृतां दातुं

कर्माणि प्रभुस्तस्यैव बुद्धेर्विशेषः प्रख्यातो भवतीत्यर्थः विपरीतैव प्रवृत्ताऽध्ययनाध्यापनपरम्परा। यया छात्राणां विकासोन्मुखानि मस्तिष्ककमलान्यकालएवालस्यतुषारपातेन शीर्यन्ते। परमनया परिपाट्या महाँल्लाभोऽपि भवति यज्ज्ञानविज्ञानराशिरंशांशविकल्पितः प्रतिविषयं स्वतन्त्रग्रन्थरूपेण परिपुष्टशरीरः सुरक्षितकोष इव बुद्धिमतां कृते निधिरूपायते; किञ्च ग्रहणधारणापटूनां छात्राणां सौकर्याय प्रथते। फलतः शास्त्रेऽस्मिन्नायुर्वेदेऽपि प्राचीनसंहिताग्रन्थानां स्थितिरध्यापनशैल्यामस्यां न सर्वथोपयोगिनी, यत्र तत्र विषयाणां प्रसङ्गवशात्तत्रतत्रोपादानेन विच्छिन्नानामितस्ततो ग्रन्थे सन्निबद्धत्वात्। अतोऽस्मिन् काले शास्त्रस्यास्यायुर्वेदस्य सर्वेष्वङ्गेषु विषयेषु च पृथक् पृथक् तत्तादृशाणां सम्पूर्णानां ग्रन्थरत्नानामस्ति खल्वावश्यकता।

मन्यते—भारतीयदर्शनशास्त्रेषु पदार्थानां विज्ञानं पूर्णत एव सञ्चितम्। परन्तैरायुर्वेदीयपदार्थविज्ञानस्य न भवति सम्यग्ज्ञानम्। आयुर्वेदीयपदार्थविज्ञानस्यादिस्रोतांसि सन्ति वेदाः, भगवद्गीता, महाभारतम्, पुराणानि, मन्वादिस्मृतयो, दर्शनग्रन्थाश्च। तथाप्यायुर्वेदज्ञैरेषु वर्णितचराणां विषयाणामविकलमुद्धरणं नैव कृतम्, प्रत्युत तेषां चिकित्साशास्त्रानुकूला रचना समुपनिबद्धा स्वकीयग्रन्थेषु। तथाहि—यैः प्रमाणैर्द्रव्यगुणादिपदार्थानां भवति परीक्षा तैरेव रोगाणां तद्धेतूनाञ्चापि क्रियते समीक्षा। अतएव—स्वतन्त्रं स्वरूपमस्त्यायुर्वेदीयपदार्थविज्ञानस्य। यथाहि खल्वाधुनिकचिकित्साशास्त्रज्ञानाय नवीनाविष्कृतभौतिकशास्त्रस्य (फिजिक्स) रसायनशास्त्रस्य च (केमिस्ट्री) चापेक्ष्यते समूढः परिचयः। विधिनानेनैव भारतीयचिकित्साशास्त्रपयोनिधौ सन्तरणाय नौरिवाचरति विज्ञानमायुर्वेदीयपदार्थानाम्।

आयुर्वेदे ह्यातिवाहिकशरीरयुक्तमात्मानमेव परमात्मनः साक्षात्स्वरूपमिति कृत्वा, चिकित्साधिकृते कर्मपुरुष एव तात्पर्यावसितिः। यथोदाह्रियते—न चायुर्वेदशास्त्रेषूपदिश्यन्ते सर्वगताः क्षेत्रज्ञा नित्याश्च,

**असर्वगतेषु च क्षेत्रज्ञेषु नित्यपुरुषख्यापकान् हेतूनुदाहरन्ति, आयुर्वेद-शास्त्रेष्वसर्वगताः क्षेत्रज्ञा नित्याश्च, तिर्यग्योनिमानुषदेवेषु सञ्चरन्ति धर्माधर्मनिमित्तम, त एतेऽनुमानग्राह्याः परमसूक्ष्माश्चेतनावन्तः शाश्वतलोहितरेतसोः सन्निपातेष्वभिव्यज्यन्ते, यतोभिहितं--'पञ्च महाभूतशरीरिसमवायः पुरुषः' ( सु० सू० १।२२ ) इति; स एष कर्म-पुरुषश्चिकित्साधिकृतः ॥ ( सु० शा० १।१६ ).**

अपरमपि सांख्यादिभ्यो भेदमायुर्वेदस्यात्मनि दर्शयन्नाह—न चेत्यादि । किन्तर्ह्यायुर्वेदशास्त्रेष्वसर्वगताः पुरुषा उपदिश्यन्ते सत्वोपाधि-वशात् ; सांख्यादिषु पुनः सर्वगता एव क्षेत्रज्ञा उपदिश्यन्ते । एवमायु-र्वेदपुरुषस्य प्रदेशवर्तिनोऽपि नित्यत्वं स्यादित्याह—नित्याश्च । "उप-दिश्यन्ते" इति शेषः । नित्यत्वञ्च कथमित्यत आह-असर्वगतेष्वित्यादि । हेतूनिति सदकारणवन्नित्यम् ( च० शा० १।५६ ) इत्यादीन् । तथाहि—सन्नात्मा, सुखादिलिङ्गोपलम्भात्, अविषयोऽकारणाश्च, अतो नित्यः । तथाहि भोजः—

> शुभाशुभाभ्यां कर्मभ्यां प्रेरणान्मनसो गतेः ।
> देहाद्देहान्तरं याति क्रिमिवच्छाश्वतोऽव्ययः ॥
> नित्य इत्युच्यते सद्भिः सन्नकारणवान्यतः ॥ इति ॥

तदेवोपसंहरन्नाह—आयुर्वेदेत्यादि । × × × सुखदुःखा-द्युपलब्धिलिङ्गेनाव्यभिचारिणैते आत्मान उपलब्धारोऽनुमातव्याः । × × × × × एष एव च सूक्ष्मपुरुषाणां पञ्चमहाभूतानाञ्च संयोगो-वैद्यके षड्धातुकः पुरुषः परिभाषितः । × × × × कर्मपुरुष इति कर्म-फलभागित्यर्थः । तेन चिकित्सितकर्मफलमप्यवाप्नोतीत्युक्तं भवति ।

( डल्हणः )

साङ्ख्यदर्शने आत्मनां सर्वव्यापकता क्षेत्रज्ञता नित्यता च परि-दृष्टा । आयुर्वेदसिद्धान्तेषु नात्मा सर्वव्यापकः किञ्च क्षेत्रज्ञत्वनित्यत्वे सांख्येन समाने । मन्ये मनसोऽसर्वव्यापकतयायुःशास्त्रेष्वात्मनोऽप्य-सर्वव्यापकता स्पष्टीभूतैव । फलत आयुर्वेदसम्मत आत्मा रागद्वेष

वशगामी सूक्ष्मः पुरुषः शुभाशुभानि कर्माणि वितन्वानस्तत्फलरूप-सुखदुःखोपभोक्तृत्वेन प्रथमशरीरतोऽन्यं शरीरं सदागतिरिव संसरन्नास्ते ।

यथाहि—जीवस्तु खलु भो ! सर्वगतत्वादीश्वरगुणसमन्वितः पूर्व-शरीराच्चावक्रामति परशरीरञ्चोपक्रामति युगपत्, न कदाचिदपि बीज-शोणितवाय्वाकाशादिमनोबुद्धिभिर्विमुक्तपूर्वः । सर्वगतत्वाच्च न कस्याञ्चिद्योनौ नोपपद्यते स्वकर्मफलानुभावादिति ।

( वृद्धजीवकीयतन्त्र गर्भावक्रान्तिशारीराध्याय ३ ) ।

त एते परमसूक्ष्माश्चेतनावन्तो नित्याः पुरुषाः इन्द्रियातीततया केवलमनुमानगम्या एव । शुक्रशोणितसंयोगे गर्भेऽपि सुखोपभोगितया चैतन्यलक्षणे परिदृष्टेऽमीषामात्मनामस्तित्वं स्फुटचरम् । एतादृश-मात्मसंसृष्टपञ्चमहाभूतसंयोगिरूपं चेतनशरीरं कर्मपुरुषमिति कृत्वा-ऽयुर्वेदोऽनुशास्ति । तात्पर्यमेतद्यदायुर्वेदे परमात्मनो विशेषप्रयोजना-भावात् सूक्ष्मशरीरसंयोगमेव परमात्मबुद्ध्या मुनयः स्वीकृतवन्तः । सर्वमेतत्प्रयोजनविजृम्भितमेव ।

उत्तरत्र गर्भस्य शरीरस्य च लक्षणमपि परदर्शनेभ्यो भिन्नमेव वर्णितचरम् । अत्रापि तदेव प्रतिपादितम्, यत्कर्मपुरुषस्य जीवनानुबन्धभूतस्यायुषश्च स्वालक्षण्ये निदर्शितम् । गर्भस्य लक्षणं यथा—शुक्रशोणितजीवसंयोगे तु खलु कुक्षिगते गर्भसंज्ञा भवति । गर्भस्तु खल्वन्तरिक्षवाय्वग्नितोयभूमिविकारश्चेतनाधिष्ठानभूतः । एवमनया युक्त्या पञ्चमहाभूतविकारसमुदायात्मको गर्भश्चेतनाधिष्ठान-भूतः, स ह्यस्य षष्ठो धातुरुक्तः । ( च० शा० ४।५-६ )

× × × चेतनाधिष्ठानभूत इति आत्मनो भोगायतनस्वरूप इत्यर्थः । चेतनाशब्देन ह्यात्मोच्यते, किंवा भूतशब्दः सादृश्ये, तेना-धिष्ठानमिवात्मनः शरीरम्, न तु परमार्थतो निराश्रयस्यात्मनो भोगाय-तनत्वव्यतिरेकेण शरीरमाश्रयो भवति । ( चक्रपाणिः )

अनया युक्त्येति, अनया भूतविकाररूपया योजनया पञ्चमहाभूतविकारसमुदायात्मको भवति। अनया युक्त्या कतिधा पुरुषोक्तीयश्चतुर्विंशतिको भवति तथा मातृजादिरूपचिन्तया मात्रासमुदायात्मको भवतीत्यर्थः। न चैतेषां पक्षाणां विरोधोऽस्ति, यतो मातृजादिव्यपदेशोऽपि पञ्चमहाभूतविकारत्वमविरुद्धमेव, येन मातृजादयोऽप्यस्य महाभूतविकारा एव।

उक्तं हि—

"रसात्ममातापितृसम्भवानि भूतानि विद्याद्दश षट् च देहे" इति।

( च० शा० २।३३ )

चतुर्विंशतिकत्वेऽपि च पञ्चमहाभूतात्मकरूपतैव तत्र प्रपञ्चिता।

"शुक्रशोणितं गर्भाशयस्थमात्मप्रकृतिविकारसम्मूर्छितं गर्भ इत्युच्यते"। ( सु० शा० ५।३ )

अथ शरीरस्य लक्षणम्—

तत्र शरीरं नाम चेतनाधिष्ठानभूतं पञ्चमहाभूतविकारसमुदायात्मकम् ( च० शा० ६।४ )

× × × चेतनाशब्देन ज्ञानकारणमात्मोच्यते, भूतशब्द उपमाने, तेन चेतनाया आत्मसम्बन्धिन्याः शरीर एवोपलम्भादात्मनः शरीरमधिष्ठानमिति भवति, परमार्थतस्तु चेतना आत्माश्रया, आत्मा च निराश्रय एव, किंवा चेतनस्यात्मनोऽधिष्ठानभूतम्। पञ्चानां महाभूतानां विकारा रसादयः, शरीरारम्भकाः, तेषां समुदायो मेलकः, स आत्मा स्वरूपं यस्य तत्तथा। समुदायशब्देन च समुदायारम्भका धातव एवोपलभ्यन्ते। तेन न संयोगमात्रस्य शरीरत्वप्रसक्तिः किंवा समुदायः संयोग एवोच्यताम्, तथापि समुदाय आत्मा कारणं यस्य शरीरस्य द्रव्यरूपस्य तत् पञ्चमहाभूतविकारसमुदायात्मकं शरीरमेव।

( चक्रपाणिः )

"शुक्रशोणितं गर्भाशयस्थमात्मप्रकृतिविकारसम्मूर्छितं गर्भ, इत्युच्यते" तं चेतनावस्थितं वायुर्विभजति, तेज एनं पचति, आपः

क्लेदयन्ति, पृथ्वी संहन्ति, आकाशं विवर्द्धयति, एवं विवर्धितः स यदा हस्तपादजिह्वाघ्राणकर्णनितम्बादिभिरुपेतस्तदा 'शरीरम्' इति संज्ञां लभते। (सु० शा० ५।३)

× × आत्मा क्षेत्रज्ञः, प्रकृतयः प्रधानादयोऽष्टौ, विकाराः पञ्चभूतान्येकादशेन्द्रियाणि चेति षोडश, तैः सम्मूर्छितं मिश्रीभूतम् 'गर्भ' इति संज्ञां लभते, एतेन योगिनामुपयोगो पञ्चविंशतिको राशिरुक्तः। तमिदानीं भिषजामुपयोगिनं षड्धातुकं कृत्वा निर्दिशन्नाह—तमित्यादि। चेतनया हेतुभूतया यावद्गर्भप्रसवकालमवस्थितं चेतनावस्थितम्, अन्यथा कुथितविशीर्णं स्यात्। ते वायुर्विभजति दोषधातुमलाङ्गप्रत्यङ्गविभागेन, तेज एनं पचति रूपाद्रूपान्तरेणावस्थानं प्रापयति, आपः क्लेदयन्ति विभागपरिणामकारिणोरनिलानयोः शोषणेऽप्यार्द्रतां जनयन्ति, पृथ्वी संहन्ति अद्भिः क्लिन्नमपि कठिनं मूर्तिमत् करोति × × आकाशं विवर्द्धयति। अनिलानलविदारितस्रोतसामाध्मापनेनोर्ध्वमधस्तिर्यग्विवर्धितमवकाशदानेन विवर्द्धयति।

(डल्हणः)

इति निदर्शनमात्रमेव। एतत्तु सम्यगवसेयम्—यत्—

प्रायो दर्शनान्याध्यात्मिकानि इति बुद्धिशाणोल्लेखेन तत्तत्प्रयोजनमुद्दिश्य तां तां युक्तिं तं तञ्चार्थमधिकृत्य केवलं दृष्टिभेदेनैव चित्रस्य तत्तत्कल्पनाप्रसूतं भिन्नत्वमिव दृश्यते, परं सूक्ष्मदृशा नैकान्ततस्तत्र किञ्चिदपि पार्थक्यम्। एवमायुर्वेददर्शनमपि परदर्शनसिद्धान्तैरनुस्यूतं केवलं चिकित्साकर्मणोऽधिष्ठानत्वेन किञ्चित्पार्थक्यमनुभवन् नैष्ठिक्यां चिकित्सायां परमार्थरूपमोक्षफलत्वेन सर्वदर्शनसमानमभिव्यनक्तीति नात्र कोऽपि विरोधलेशः।

तद्धि पूर्वप्रकान्तं पदार्थविषयमधिकृत्य वैद्यवर्येण रणजीतरायमहोदयेनायुर्वेदालङ्कारेण 'आयुर्वेदीयपदार्थविज्ञान' नामा निबन्धो विरचितः। अपरश्च वैद्यनाथ आयुर्वेदभवनाध्यक्षेण रामनारायण-

वैद्यवर्यमहोदयेन पण्डितवर्यरामरत्नपाठकैरायुर्वेदाचार्यमहोदयै-र्विरचितः प्राकाश्यमनायि। द्वावपि निबन्धौ महता श्रमेण निबद्धाविति निर्विवादम्। तयोरायुर्वेदविषयकः कृत्स्नोऽपि पदार्थविषयो निरूपितः। परमस्ति जामनगरस्थश्रीबलवन्तशर्मदीक्षितप्रणीते पदार्थविषयक-निबन्धे कियानपि शास्त्रार्थगम्भीरगवेषणाफलितार्थश्चमत्कृतिविशेषः। श्री दीक्षितमहोदयेन ग्रन्थरत्नस्यास्योपोद्घातरूपेण आयुर्वेदीय पदार्थ-विमर्शनामा द्वाचत्वारिंशत् पृष्ठात्मकः कोपि स्वतन्त्रविचारप्रतिपादकः प्रास्ताविकोपक्रमः समुपक्रान्तः। आयुर्वेदशास्त्रप्रविविक्षुभिश्छात्रै-रुपयोगितया स सन्दर्भोऽवश्यमध्येयः।

श्रीदीक्षितमहोदयानां रचना विषयप्रतिपादने प्राचां शैलीमनु-वदति। सारगर्भिता चास्य विदुषामुपयोगसामग्री। अध्यापकवर्गश्च ग्रन्थस्य पौर्वापर्यमनुपन्नाय छात्रहृदयेषु पदार्थस्वरूपमाश्रयेणानेन सम्यक् संक्रामयिष्यति इति विश्वसिमि। आयुर्वेदजगति प्रकाशस्तम्भस्वरूपैः स्वर्गतैः स्वनामधन्यैरायुर्वेदमार्तण्डलक्ष्मीरामस्वामिसहाभागैः संस्था-पितेन "श्री स्वामि लक्ष्मीराम ट्रस्ट (निधि)" इत्याख्यसंस्थानेन 'प्रसूतितन्त्र' नामकं ग्रन्थरत्नमचिरादेव काशीवास्तव्यैः श्री दामोदर-गौड़महोदयैः डॉ० अच्युत पटवर्द्धन महोदयैश्च निर्मापितम्। किञ्च पाठ्यग्रन्थेषूपयोगायैवास्यापि ग्रन्थस्य रचना (निधि) ट्रस्टेन दीक्षित-महोदयैः कारिता। विज्ञाः स्वायमधीत्य ग्रन्थस्यास्य गौरवं सम्यग् ज्ञास्यन्तीति त एवात्र दृढं प्रमाणम्।

येषां प्रेरणया विनिर्माय ग्रन्थोऽयम् पुरतः समुपस्थाप्यते सुधि-याम्, ते हि श्रीमन्त आयुर्वेदमार्तण्डाः श्री यादवजी त्रिकमजी महोदयाः यदि स्वयमस्य प्रस्तावनामलेखिष्यन् तर्हि सुन्दरतरमभविष्यत, परं ते हि स्वकृपातो मामस्मिन् विनियोजितवन्तः। प्रस्तुतं ग्रन्थमिमं विशदमसमालोचयन् संक्षेपतः स्ववक्तव्यं प्राकाशयम्। प्रत्येमि च विषयो ऽयमायुर्वेदाध्यापनस्य महत्तामात्मनि संधत्ते। अस्मिन् विषये विद्वद्भिः साधिकारमभिनिविश्याध्यापनकलावैशिष्ट्यमभिप्रापणीयम्।

किञ्चैषापि मम धारणा यच्छात्रैरध्यापनकलापि अभिप्रेतविषयत्वेन सम्यगधिगन्तव्या। सम्प्रति—यथाहि प्रचलितप्रायं यत् उपाधिपरीक्षोत्तरणानन्तरमुत्तमछात्रेभ्य अध्यापनशैली सनियमं शिक्ष्यते, तथैवायुर्वेदीया अपि ये स्नातका अध्यापने प्रकटितनिजाभिरुचयः प्रतिभासम्पन्नास्ते स्वतन्त्ररूपेणाध्यापनशैलीप्रशिक्षणानन्तरमेव विद्यालयेष्वध्यापकत्वेनाभिनियोज्याः। अनेनैव पथा भविष्यति समुद्धारोऽध्यापनशैल्याः। मन्यते नहि सर्वेषु समेषां गुणानां भवत्यवश्यम्भावी विकासः। परमायुर्वेदसदृशस्य प्रयोगप्रधानस्य शास्त्रस्याध्यापननिर्माणचिकित्सादयो विषया. स्वतन्त्रतया नैजेषु विभिन्नेषु मार्गेषु अधिकाधिकं गवेषणां श्रमञ्चापेक्षन्ते।

सैषा कोटिरेव पाठ्यपुस्तकत्वेन विषयप्रधानग्रन्थनिर्माणेऽपि प्रस्तूयते यया समुपनिबद्धान् पुरतः प्रस्तुतान् ग्रन्थान् आधारतयोररीकृत्य स्वयं तत्तद्विषयकेषु ग्रन्थेषु तत्तत्प्रकरणेषु तत्तेषां विषयाणाम्मूलान्वेषणाय स्वबुद्धिविभवं प्रसार्य—ऊहापोहेन निश्चित्य सम्यक् शास्त्रार्थान् अध्यापने साधिकारं प्रवक्तुं प्रभवेत्पाठकजनः। सैषा शैली खलु अध्यापनस्य युगानुसारिणी परिवर्तितनिजस्वरूपा आसृष्टेः प्रचलिता; विद्यते चाधुनापि। अस्तु प्रपञ्चितेन। प्रस्तुतग्रन्थरत्नमायुर्वेदविद्यालयीयपाठ्यग्रन्थेषु स्वकीयं प्रतिष्ठितं स्थानं रचनावैशिष्ट्य ललप्स्यत इति दृढं विश्वसन् विरमामि।

गवर्नमेण्ट-आयुर्वेद-कालेजः
जयपुरम्
विजयदशम्याम् २००७
वैक्रमेऽब्दे

विदुषां विधेयः—
**राजवैद्यनन्दकिशोरः शर्मा**
राजस्थानीयायुर्वेदशिक्षाधिकृतः

❀ श्री ❀

आयुर्वेदमार्तण्ड श्रीस्वामिलक्ष्मीरामट्रस्ट, जयपुर

के

# वर्तमान पदाधिकारी

| | |
|---|---|
| श्रीमान् महन्त गंगादासजी | सभापति |
| ,, पं० श्यामसुन्दरजी शर्मा एम० ए० | मन्त्री |
| ,, राजवैद्य पं० नन्दकिशोरजी शर्मा भिषगाचार्य | कोषाध्यक्ष |
| ,, त्यागमूर्ति स्वामी मंगलदासजी | सदस्य |
| ,, स्वामी जयरामदासजी भिषगाचार्य | ,, |

जयपुर
२०-१०-५०

## ॥ आयुर्वेदीयपदार्थविमर्शः ॥

हंहो विदितवेदितव्यानामधिगताधिगन्तव्यानामनुष्ठितानुष्ठेयानां गुणदोषविवेचने सितच्छद इव नीरक्षीरविवेकेऽधिकारवतां तत्रभवतां भावुकानामतिरोहितं यदायुर्वेदः स्वयमात्मानमुपवेदतामुपनिनिपुर्वैदिकतत्त्वदर्शनाधारभूता दृढतरविज्ञानशिला उपष्टम्भयंस्त्रिदोष-त्रिधातु-सिंहासनमधिरोहतीति। न सर्वासूपलभ्यमानास्वायुर्वेदसंहितासु दार्शनिकमौलसिद्धान्तोपलम्भो वरीवर्त्ति, केवलं चरकसुश्रुतयोः प्रसङ्ग-सङ्गता वाग्व्याहारा दार्शनिकविचारगुम्फिताः सूचका वाऽऽसाद्यन्ते किन्तु नात्र निरपेक्षसूक्ष्मेक्षिकयेक्षिते किमपि स्वतन्त्रमायुर्वेददर्शनमस्तीत्युपपादयितुं प्रभूयते।

कृतप्रयत्नैरप्यस्माभिरासाद्यमानेष्वास्तिकनास्तिकदर्शनेषु वर्तमानायुर्वेदसंहितोपनिबद्धदर्शनमविकलं यथातथं न दृग्गोचरीक्रियते, ऋते च तत्वसंग्रहकृच्छान्तिरक्षितकमलशीलाभ्यां न केनापि कुत्राप्यायुर्वेददर्शनं पूर्वपक्षेऽपि निक्षिप्तं येन पुरा किल किमप्यायुर्वेददर्शनं बभूवेत्यनुमीयेत। चरकचतुराननश्चक्रपाणिरपि "सर्वपारिषदमिदं शास्त्रं तेनायुर्वेदाविरुद्धवैशेषिकसाङ्ख्यादिदर्शनभेदेन विरुद्धार्थोऽभिधीयमानो न पूर्वापरविरोधमावहतीति" प्रतिपादयन् यत्र तत्र विकीर्णानां विचाराणां सङ्कीर्णतां विशृङ्खलताञ्च दृढयति। तथापि तत्र तावत्प्रसिद्धदर्शनशास्त्रीयसिद्धान्तैः समं चरकसंहिताप्रतिपादितानां सिद्धान्तानां समन्वयापादनाय संधाय संभाषाविधया तुलनात्मकदृष्टिविशिष्टः समीक्षारूपोऽयमारम्भः। यद्यपि चरकसंहितायां यत्र तत्र विभिन्नेषु अध्यायेषु प्रसङ्गसङ्गता इतस्ततो विप्रकीर्णाः सङ्कीर्णा दार्शनिकविचारा उपलभ्यन्ते तथापि शारीरस्थानस्यादिमोऽध्यायः प्राधान्येन दार्शनिकसिद्धान्तप्रतिपादनपरः, तत्र द्वादशभिः श्लोकैरग्निवेशकृताः प्रश्नाश्चत्वारिंशदुत्तरेण शतेन च श्लोकानां भगवतः पुनर्वसोरुत्तराणि गुम्फितानि सन्ति। सौलभ्येन दार्शनिकसिद्धान्ता वाचकानां मति-

मार्गगाः स्युरित्यैतिहासिकसरणिमनुसृत्य विचारांश्छन्दलयितुकामै-रस्माभिः कृता संहिता क्रमोल्लङ्घना सतां न विरसतामापादयिष्यतीत्यस्माकमाश्वासः।

अनुमीयते द्विविधं खलु सांख्यं सांख्यैराद्यैः इति स्मृत्याऽऽद्यपदेनाभिनवसांख्येभ्यः प्राचीनसाङ्ख्यानां व्यावर्तनात् "मौलिक्यसाङ्ख्या हि" इति षड्दर्शनसमुच्चयटीकाकृता च मौलिक्यपदोपादानाच्च, तत्र ईश्वरकृष्णादिसम्मतं पञ्चविंशतितत्त्वात्मकं ततः प्राचीनं च चतुर्विंशतितत्त्वात्मकमिति। तथाहि—महाभारते शान्तिपर्वणि

श्रूयतामवनीपाल यदेतदनुपृच्छसि।
योगानां परमं ज्ञानं साङ्ख्यानां च विशेषतः॥
अष्टौ प्रकृतयः प्रोक्ता विकाराश्चापि षोडश।
आसां तु सप्त व्यक्तानि प्राहुरध्यात्मचिन्तकाः॥
अव्यक्तं च महांश्चैव तथाहङ्कार एव च।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम्॥
एताः प्रकृतयस्त्वष्टौ विकारानपि मे शृणु।
श्रोत्रं त्वक्चैव चक्षुश्च जिह्वा घ्राणं च पञ्चमम्॥
शब्दः स्पर्शश्च रूपं च रसो गन्धस्तथैव च।
मनः षोडशकं प्राहुरध्यात्मगतिचिन्तकाः॥ [अ० ३१५]

इत्येवं प्रतिपादितानि चतुर्विंशतितत्त्वानि योगीश्वरयाज्ञवल्क्येनापि स्मृतानि। तथाहि—

बुद्धीन्द्रियाणि सार्थानि मनः कर्मेन्द्रियाणि च।
अहङ्कारश्च बुद्धिश्च पृथिव्यादीनि चैव हि॥
अव्यक्तमात्मा क्षेत्रज्ञः क्षेत्रस्यास्य निगद्यते।

इति [४-१७७-१७८]

चरकीयसांख्यञ्च मौलिक्यसाङ्ख्यानुवादि। तथाहि—

खादीनि बुद्धिरव्यक्तमहङ्कारस्तथाष्टमः।
भूतप्रकृतिरुद्दिष्टा। विकारा इति संज्ञिता॥

बुद्धीन्द्रियाणि पञ्चैव पञ्च कर्मेन्द्रियाणि च।
समनस्काश्च पञ्चार्था विकारा इति संज्ञिताः॥

[ च० शा० १ ]

नचात्राव्यक्तपदेन साङ्ख्यीयप्रकृतिग्रहणं सुशकं—

"इति क्षेत्रं समुद्दिष्टं सर्वमव्यक्तवर्जितम्।
अव्यक्तमस्य क्षेत्रस्य क्षेत्रज्ञमृषयो विदुः॥
अव्यक्तमात्मा क्षेत्रज्ञः शाश्वतो विभुरव्ययः"।

इति अव्यक्तपदेन क्षेत्रज्ञस्यात्मनो ग्रहणोक्तेः न केवलं चरकस्यायं सिद्धान्तः किन्तु काश्यपादिमहर्षीणामपि, तथाहि—समुदायकरणं त्रूमः, अव्यक्तान्महान्, महतोहंकारः, अहंकारात् खादीनि, ता अष्टौ प्रकृतयः। चक्षुः श्रोत्रं घ्राणं रसनं स्पर्शनमिति पञ्चेन्द्रियाणि तान्येव बुद्धीन्द्रियाणि। हस्तौ पादौ गुद उपस्थ इति पञ्च कर्मेन्द्रियाणि, शब्दस्पर्शरूपरसगन्धाः पञ्चेन्द्रियार्थाः, अतीन्द्रियं तु मनः, इत्येते षोडश विकाराः। महदादि-सर्वं क्षेत्रमव्यक्तमाचक्षते क्षेत्रज्ञं तु शाश्वतमचिन्त्यमात्मानमिति। [ वृद्धजीविकीयम् ४—१ ] इत्थंच वर्तमानकालोपलभ्यमानेश्वरकृष्णादि-सम्मतसाङ्ख्याद्भिन्नं चतुर्विंशतितत्त्वात्मकं सांख्यं हि आयुर्वेदाचार्याणां सम्मतं बभूवेति निश्चप्रचम्। जामनगरीयायुर्वेदमहाविद्यालये पदार्थ-विज्ञानाध्यापने नियुक्तोहमेतन्महाविद्यालयप्रधानाध्यापक आयुर्वेद-मार्त्तण्ड श्री यादवजी त्रीक्रमजी आचार्यमहामहाभागैः सांप्रतिकपाठ्य-पुस्तकेषु आयुर्वेदीयपदार्थानां तद्विरुद्धपदार्थानां च संकीर्णतां, आयुर्वेदीय-विशुद्धपदार्थविज्ञानीयपाठ्यपुस्तकाभावं चोपलिप्य्यादिष्ट आयुर्वेदीय-पदार्थविज्ञानग्रन्थनिर्मितये, आज्ञामिमां पूज्यचरणानामेतेषां शिरसाभि-नन्द्य प्रवृत्त आयुर्वेदीयपदार्थविज्ञाननामानमिमं निबन्धमग्रथ्नाम्। एतस्य प्रस्तावनारूपेण ग्रन्थस्वारस्यरक्षणदक्षक्षणैर्विचक्षणैः कैश्चिदाधुनिकविद्वद्वरैः प्राचीनटीकाकृतां पन्थानमपहाय प्रचलितैः तूणां पद्धतिमास्थाय विहितास्मल्लिखितचरकसंहिताप्रस्तावनात उद्धृत्यात्र पदार्थविमर्शो विधीयते।

स्वास्थ्यसंपादनशास्त्रेऽत्र चतुर्विधपुमर्थाधिकारी मनुजोधिक्रियत इत्यत्र न कापि विचिकित्सा चिकित्सकानां, तथाच सुश्रुतसंहिताकृदाह "अस्मिंस्तु शास्त्रे पञ्चमहाभूतशरीरसमवायः पुरुषोधिष्ठानं तस्मिन्क्रिया इति"। सोयं पुरुषः चिकित्सायां जीवद्रूपोधिक्रियते नाजीवन्, जीवितविरहिते त्वस्या आनर्थक्यादसम्भवाच्च। अतएव "शरीरं नाम चेतनाधिष्ठानभूतं पंचमहाभूतविकारसमुदायात्मकं समयोगवाहि" (च० शा० ६-४) इत्यग्निवेशेन चेतनाधिष्ठितमेव शरीरं व्याख्यायि। चेतनाधिष्ठितशरीरात्मकस्यास्य चिकित्साधिकृतपुरुषस्य पंचमहाभूतविकारविभागस्तु शारीरविचयनाम्नि शारीरस्थानस्य षष्ठेऽध्याये विस्तारेण निरूपितो नात्र लेखिनीप्रचारणप्रयासो विधीयते। पूर्वोक्तविचारप्रणालिकामनुसृत्यैव "कतिधा पुरुषो धीमन्" इत्येष प्रश्नः प्रश्नमूर्धन्यत्वेन च प्रथममुपन्यस्तः, स्वल्पाक्षरैरात्मतत्वप्रकटनपरं पुनर्वसुप्रदत्तं—

"खादयश्चेतना षष्ठा धातवः पुरुषः स्मृतः।
चेतना धातुरप्येकः स्मृतः पुरुषसंज्ञकः॥"

—इत्येतदुत्तरं च पूर्वोक्तप्रणालिकानुसरणेनैव सङ्गच्छते। पुरा किल प्राच्यैर्महर्षिभिरात्मा पुरुष इत्यादय शब्दा नैकार्थबोधकत्वेन प्रायो व्यवहृता दृश्यन्ते तथात्र खादयश्चेतना षष्ठा धातवः पुरुषः स्मृत इति पुरुषशब्दो मनुष्यार्थे व्यवहृतः। चेतनाधातुरप्येक स्मृत पुरुष संज्ञक इत्यनन्तरवाक्य आत्मार्थे च व्यवहृतो दृश्यते, अत्र पुरुषशब्दव्याचिख्यासया चक्रपाणिना अयं च वैशेषिकदर्शनपरिगृहीतश्चिकित्साशास्त्रविषय पुरुष इत्युक्तं, वैशेषिकसूत्रे आत्मन पृथङ्मनश्चोपात्तमत्र तु केवला चेतनैव तेनात्र चेतनाशब्देनात्ममनसोरुभयोरपि ग्रहणं विधेयमिति चक्रपाणेरभिप्रायः, यद्यपि चरके परत्र षड्धातुविस्ताररूपा तत्वानां चतुर्विंशतिः परिगणिता तथापि चतुर्विंशतितत्वात्मकः पुरुष इत्यस्माद्विचारात् षड्धातुसमुदायात्मकः पुरुष इत्येष विचारः प्रचीनतरः प्रतिभाति। सुश्रुतोपि सूत्रस्थाने

शारीरस्थाने च पञ्चमहाभूतशरीरिसमवायः पुरुष इत्येवं प्राचीनविचार-मेवोपन्यस्यति ।

## सृष्टिप्रक्रिया—

"पुनश्च धातुभेदेन चतुर्विंशतिकः स्मृतः ।
मनोदशेन्द्रियाण्यर्थाः प्रकृतिश्चाष्टधातुकी "।

इति मनो ज्ञानेन्द्रियाणि कर्मेन्द्रियाण्यष्टधातुकी प्रकृतिश्चेत्युक्ता तत्वचतुर्विंशतिः षट् तत्व विस्ताररूपा, अत्र खादीनि बुद्धिरव्यक्तमहङ्कारस्तथाष्टमः । भूतप्रकृतिरुद्दिष्टेति गगनानिलानलजलेलाः पञ्च भूतानि बुद्धिरव्यक्तमहंकारश्चेत्यष्टधात्वात्मिका भूतप्रकृतिर्बोध्या । इयं प्रकृतिश्चाष्टधातुकीत्युक्तिः साङ्ख्यानुसारिणी, साङ्ख्या हि मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारः इति चतुर्विंशतितत्वेषु षोडश विकारानष्टौ प्रकृतीश्चेति कथयन्ति । यद्यपि चरकेण महदादीनां प्रकृतिविकृतित्वं शब्देन नाम्नातं तथापि 'अव्यक्ताद्-बुद्धिरुत्पन्ना बुद्ध्याहमिति मन्यते । परंखादीन्यहंकारादुत्पद्यन्ते यथा-क्रममितिवचनादव्यक्तान्महदादीन्युत्पद्यन्ते महदादिभ्यश्चाहंकारादय इत्यर्थतो महदादीनां प्रकृतिविकृतित्वमनामन्त्रितमप्यायातीति न तन्निरोद्धुं शक्यम्, अपिच चरकसंहितायां कण्ठरवेण खादीनि बुद्धिरव्यक्तमहंकारस्तथाष्टमः । भूतप्रकृतिरुद्दिष्टेति केवलं प्रकृतित्वमेषामुक्तं न चैतेषां कुत्रापि विकृतित्वमाम्नातं तच्चोपपादयितुं परंखादीन्यहंकारादुत्पद्यन्ते यथाक्रममित्यस्याहङ्कारादनन्तरं खादीनि स्थूलभूतान्युत्पद्यन्त इत्यर्थो ग्राह्यः तथात्वेचाहंकारस्य खादीनामुपादानता निराक्रियते । प्रकृतिरूपाणि—अनादीनि खादिभूतानि पुनरहंकारानन्तरं चैतेषामुत्पत्तिश्चेतीमं विरोध-मुपशमयितुमन्तरा भूतैश्चतुर्भिः सहितः सुसूक्ष्मैरित्युक्तानि सूक्ष्मभूतानि स्वीकर्तव्यानि यानि अनुत्पत्तिमत्वेन प्रकृतिरूपाणि स्युर्येभ्यश्च स्थूलभूताना-मभिव्यक्तिरूपोत्पत्तिश्च सुसंगता स्यात् । यदि चात्र यथार्थोत्पत्तिर्महर्षे-रभिमता स्यादेतानि विकृतित्वेनापठिष्यत् किन्तु न विकारेषु भूतानि

पठितानि केवलं प्रकृतित्वेनैवोक्तानि, अतः प्रकृतिरूपाणि सूक्ष्मभूतानि परमाणुतुल्यानीति समाधिः। विकारजननीं मायामष्टरूपामजां ध्रुवामिति श्रुतौ प्रोक्तेष्वष्टरूपेषु खादयश्चेतनाषष्ठा धातवः पुरुषः स्मृत इत्युक्तानां चेतनाषष्ठानां खादीनां समावेशस्य सुसंगतेश्च। व्यक्ततरगुणान्वाय्वादींश्चतुर इत्यत्रोत्पाद्यमानानां वाय्वादीनां व्यक्ततरगुणत्वोक्तेरनुत्पाद्यानां नित्यानामव्यक्तगुणता चार्थतः प्राप्यत एव, एतेनाव्यक्तगुणानामेतेषां केनाप्युक्तं तन्मात्रात्वं परमाणुत्वं वा सुसंगतं स्यात्, आचार्यवर्य श्रीगौड़पादैरपि कारिकाभाष्ये तन्मात्राणां परमाणुत्वस्वीकृतेश्च। साङ्ख्यैरव्यक्तं, महत्तत्वं, अहंकारः पञ्चतन्मात्राणीत्येषामष्टानां प्रकृतित्वमाख्यायते चरकेण तु अव्यक्तं, महत्तत्वं, अहंकारः पञ्चभूतानीत्येतेषामष्टानाम्, अनयोरेकत्र पञ्चतन्मात्रा, इतरत्र पञ्चभूतानि, एकत्र अव्यक्तं नाम प्रकृतिः, इतरत्र अव्यक्तमस्य क्षेत्रस्य क्षेत्रज्ञमृषयो विदुरिति अव्यक्तं क्षेत्रज्ञ आत्मा, इति स्पष्टो भेदो दरीदृश्यते।

"भूमिरापोनलो वायुः खं मनो बुद्धिरेव च।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा॥"

इति भगवद्गीतायामव्यक्तकर्मजा बुद्धिरहंकारं प्रसूयते।

आकाशं चाप्यहंकाराद्वायुराकाशसंभवः।
वायोस्तेजस्ततश्चाप अद्भ्योथ वसुधोद्गता॥
मूलप्रकृतयो ह्यष्टौ जगदेतास्ववस्थितम्।

[ म० शा० २१२-४०-४१ ]

इति महाभारते च प्रकृतौ पञ्चभूतानि दृश्यन्ते। सांङ्ख्यैरुक्तास्तन्मात्रा एव—

"ज्ञानेन्द्रियाण्यतः पञ्च पञ्च कर्मेन्द्रियाण्यपि।
विषयाः पञ्च चैकं च विकाराः षोडशं मनः॥"

[ म० भा० २१२ ]

बुद्धीन्द्रियाणि पञ्चैव पञ्च कर्मेन्द्रियाणि च।
समनस्काश्च पञ्चार्था विकारा इति संज्ञिताः॥

[ च० शा० १–६४ ]

इति महाभारते चरके च विषयपदेन चोक्ताः—

"पृथिवी च पृथिवीमात्रा चापश्चापोमात्राः"

इति प्रश्नोपनिषदि गुणाश्च मात्राशब्देनोक्ताः। "मात्रास्पर्शास्तु कौन्तेय" इति भगवद्गीतासु च विषया मात्राशब्देनोक्ताः, स्यादेतदेव साङ्ख्यीयतन्मात्राप्रभवस्थानमिति केषांचिन्मतम्। यद्यपि चरकचतुराननश्चक्रपाणिः खादीनि सूक्ष्मभूतखादीनि तन्मात्राशब्दाभिधेयानीति व्याख्याति परमेतदैतिहासिकदृष्टिविधुरस्य चक्रपाणेः प्रमाद एव तन्मात्राशब्दानुपलब्धेरिति कैश्चिदुक्तं तत्त्वापातरमणीयमिव विद्यते, वेदान्तिभिर्यथासृष्टिप्रक्रियायामनाम्नातान्यपि भूतसूक्ष्माणि संहारप्रक्रियायां लिङ्गशरीरप्रस्तावे "तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः" इति सूत्रभाष्ये देहाद्देहान्तरप्रतिपत्तौ देहबीजभूतसूक्ष्मैः संपरिष्वक्तो रंहतीत्यादिना महता टोपेनोच्यन्ते, तथैवात्र सृष्टिप्रक्रियायामनाम्नातान्यपि सूक्ष्मभूतानि संहारप्रक्रियायां लिंगशरीरप्रस्तावे "भूतैश्चतुर्भिः सहितः सुसूक्ष्मैर्मनोजवो देहमुपैति देहात्" 'अतीन्द्रियैस्तैरिति सूक्ष्मरूपैरित्येवमात्मानं देहाद्देहान्तरप्रापकाणि बीजधर्मिरूपाण्यतीन्द्रियाणि सूक्ष्मभूतान्युक्तानि, उत्पत्तिप्रस्तावेऽनिर्दिष्टान्यपि तान्यकामैरपि हठात्स्वीकर्तव्यानि, एतानि तन्मात्राशब्दाभिधेयार्हाणि नवेति नास्माकमाग्रहः, शब्दभेदस्वीकारेऽप्यर्थभेदापादनस्य सर्वथा शक्यत्वात्। केवलमिमानि सूक्ष्मभूतानि तन्मात्राणीव गुणरूपाणि गुणिरूपाणि वेति सुधीभिर्विवेचनीयम्।

उपनिषत्सु सृष्टिप्रक्रियायां महत्तत्त्वमहङ्कारश्च नोपलभ्येते तत्तेजोऽसृजत, तदपोऽसृजत, इत्येवं छान्दोग्योपनिषदि "आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवीति" तैत्तिरीयोपनिषदि च पृथक् सृष्टिक्रमो

ऽवलोक्यते। ब्रह्मसूत्रकृता भगवता व्यासेन तु "तस्माद्वा एतस्मादात्मन आकाश आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी" त्येष क्रमः स्वीकृत इति ब्रह्मसूत्रद्वितीयाध्यायतृतीयपादे विचारिते निश्चीयते, कठोपनिषदि

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः॥
महतः परमव्यक्तमव्यक्तात् पुरुषः परः।

—इति मनोबुद्धिमहदव्यक्तानि, प्रश्नोपनिषदि च मनोबुद्ध्यहंकारचित्तान्याध्यात्मिकद्रव्यत्वेनोक्तानि तानि च सर्वाणि ब्रह्मणो जातानीति। यद्यपि ब्रह्मसूत्रकृत् "अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्न अविशेषात्" इत्यनेनाकाशात्प्राग्मनसो बुद्धेश्च सन्निवेशं निवारयति, तथापि महाभारते पुराणेषु चाव्यक्तबुद्ध्यहङ्कारविशिष्टा सृष्टिकल्पना दृश्यते, सोयं क्रम ईश्वरकृष्णेन सांख्यकारिकायां सुदृढं निरूपितः, चरकोक्तः सृष्टिक्रमो बहुधा सांख्यकारिकामनुसरन्नपि क्वचिद्भिन्नप्रस्थानीय इव भिद्यते। अत्र सात्विकादिभेदविशिष्टोऽहंकारश्चरकेन पठ्यते इति कैश्चिदुक्तं तद्वाग्विलासान्नातिरिच्यते, "त्रिविधं खलु सत्वं शुद्धं राजसं तामसमिति" मनसस्त्रिगुणत्वस्य, तथा 'आत्मा च सगुणः' "गुणी" इत्येवमात्मनः सगुणत्वस्य शब्देन पठितत्वेन मध्यपातिनोर्बुध्यहङ्कारयोरनाम्नातमपि त्रिगुणत्वं कार्यगुणानां कारणगुणपूर्वकत्वनियमात्सिद्धमेव।

"सात्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात्।
भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम्॥
तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः।"

इति सांख्यैर्निरूपितं मनःसहितानां दशेन्द्रियाणामाहङ्कारिकत्वं चरके नास्ति, चरके तु पञ्चमहाभूतविकारसमुदायात्मकानीन्द्रियाणि स्वीक्रियन्ते, शारीरकभाष्ये "यदि तावद्भौतिकानि करणानि" "अथत्वभौतिकानि करणानि" इत्येवमुभयविधोल्लेखदर्शना-

दाचार्यस्य नान्यतरपक्षे पक्षपातइवाभाति, परवर्तिनो वेदान्तसार-कृदादयः सूक्ष्मभूतेभ्यो बुद्धेर्मनस इन्द्रियदशकस्य चोत्पत्तिं वर्णयन्ति।

## चेतनाधातुस्वरूपम्—

'खादयश्चेतनाषष्ठा धातवः पुरुषः स्मृतः' इति 'पृथ्वी आपस्तेजो-वायुराकाशं ब्रह्म च व्यक्तम्' इत्येवं च "षड्धातवः समुदिताः पुरुष इति संज्ञां लभते" इति षड्धात्वात्मकः पुरुष उक्तः, अत्र पञ्चभूत-ग्रहणेन शब्दादिविषयपञ्चकस्येन्द्रियदशकस्य च ग्रहणं कर्तव्यं तेषां भौतिकत्वात्, चेतनाशब्देनावशिष्टानां मनोबुद्ध्यव्यक्ताहङ्काराणां च ग्रहणं विधेयं "मनो मनोर्थो बुद्धिरात्मा चेत्यध्यात्मद्रव्यगुणसंग्रहः" इत्युक्तेः, अत्र बुद्धिशब्देनाहङ्कारोऽपि ग्रहीतव्यस्तस्य बुद्धिग्रहणेन ग्रहण-स्योचितत्वात्। एतेन तत्त्वचतुर्विंशतिः परिगृहीताऽवगन्तव्या।

> बुद्धीन्द्रियमनोर्थानां विद्यायोगधरं परं।
> चतुर्विंशतिको ह्येष राशिः पुरुषसंज्ञकः॥
> पुनश्च धातुभेदेन चतुर्विंशतिकः स्मृतः।

—इत्युक्तेः। सोयं चेतनाधातुरध्यात्मद्रव्यसंग्रह आत्मशब्देनोक्तः।

एष एव शरीरचैतन्ये हेतुरित्यायुर्वेदाचार्याणां निश्चयः। जग-दुत्पत्तिकारणमव्यक्तं प्रकृतिश्चात्रात्मशब्देन ग्राह्येति चरकवचनानां समन्वयतो लभ्यते। सांख्यास्तु—

> त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि।
> व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान्॥
> न प्रकृतिर्न विकृतिः पुरुषः।

इति त्रिगुणात्मिकां जड़ां प्रकृतिं जगत्कारणत्वेन मन्यन्ते, प्रकृति-विकृतिभिन्नं पञ्चविंशमुदासीनं पुरुषं च। चरकस्तु—

> खादीनि बुद्धिरव्यक्तमहङ्कारस्तथाष्टमः।
> भूतप्रकृतिरुद्दिष्टा विकाराश्चैव षोडश॥

बुद्धीन्द्रियाणि पञ्चैव पञ्च कर्मेन्द्रियाणि च ।
समनस्काश्च पञ्चार्था विकारा इति संज्ञिताः ॥
इति क्षेत्रं समुद्दिष्टं सर्वमव्यक्तवर्जितम् ।

इतित्रयोविंशतितत्वात्मकं क्षेत्रं निर्दिश्य अव्यक्तमस्य क्षेत्रस्य क्षेत्रज्ञमृषयो विदुः, इत्यव्यक्तस्य क्षेत्रज्ञताम् 'अव्यक्तमात्मा क्षेत्रज्ञः शाश्वतो विभुरव्ययः' इति क्षेत्रज्ञस्यात्मतां निर्दिशति। इमं ग्रन्थं व्याचक्षाणश्चक्रपाणिः अव्यक्तवर्जितमिति प्रकृत्युदासीनवर्जितमिति विवृणोति, परं नैतद्विवरणं वयं साधु मन्यामहे, सांख्यैरिव चरकसंहिताकृद्भिर्नकुत्रापि प्रकृतिभिन्ना उदासीना बहवः पुरुषाः, पुरुषेभ्यो भिन्ना एका च प्रकृतिराख्याता । पूर्वोक्तस्य खादयश्चेतनाषष्ठा इति वचनोपात्तस्य षड्धात्वात्मकपुरुषस्यैव तत्व विस्तारः पुनश्च धातुभेदेनेत्यादिना व्याख्यातः व्याख्यातेषु एषु चतुर्विंशतितत्वेषु चेतनाशब्दो न लभ्यते न चाव्यक्तं विहायेतरस्य कस्यापि चेतनायाः पर्यायत्वेन ग्रहणं कर्तुं च शक्यते तथा "अव्यक्तमात्मा क्षेत्रज्ञः" इत्यव्यक्तस्यात्मत्वं क्षेत्रज्ञत्वं च निराकांक्षत्वसिद्धये स्वयं ग्रन्थकृदेव व्याख्याति। तस्माच्चेतनाशब्देनात्रात्मैव ग्रहीतव्य इति प्रतिपत्तव्यम् ।

यदि चाव्यक्तशब्देन साङ्ख्यसंमता प्रकृतिः स्वीक्रियेत पञ्चविंशतितत्ववादिनां साङ्ख्यानां निरीश्वरतेव चतुर्विंशतितत्ववादिनामायुर्वेदविदां निरात्मता निरीश्वरतासहकृताऽऽपद्येत, सा च निरात्मवादनिराकरणपरस्य चरकस्य मते कथमिव सुसंगता स्यात् ? भगवद्गीतासु "अव्यक्तोयमचिन्त्योयमित्यात्मविषयोऽव्यक्तशब्दः प्रयुक्तः ।" "अव्यक्तं ब्रह्म शाश्वतम्" इति महाभारते चाव्यक्तशब्देन ब्रह्म प्रोक्तम्, "तदव्यक्तमाह हि" इति सूत्रेण व्यासोपि ब्रह्माव्यक्तमाह, इत्थमत्राप्यव्यक्तशब्देन जगत्कारणब्रह्मणः स्वीकारेऽनायासेनैवैकात्मवादः सिद्ध्येत्, यद्यपि आत्मा एकः इति प्रदिपदोक्ता श्रुतिश्चरके नोपलभ्यते तथाप्यात्मशब्दः पुरुषशब्दश्च सर्वत्रैकवचनविशिष्टः प्रयुक्त उपलभ्यते। "शाश्वतो विभुरव्ययः" "देही सर्वगतोप्यात्मा" इति ।

"विभुत्वमतएवास्य यस्मात्सर्वगतो महान्"
"सर्वयोनिगतं विद्यादेकयोनावपि स्थितम्"

—इत्यादिभिरात्मनो विभुत्वं तथा "बुद्धिः स्मृतिरहंकारो लिङ्गानि परमात्मनः" इत्यनेन जीवात्मनः परमात्मशब्दवाच्यत्वं च दृश्यते। स सर्वगः सर्वशरीरभृच्च स विश्वकर्मा स च विश्वरूपः। स चेतनाधातु-रतीन्द्रियश्च स नित्ययुक्सानुशयः स एव" इति चेतनाधातोः सर्वशरीर-धारकत्वं, विश्वरूपत्वं, स्पष्टमाम्नातम्। पूर्वं चेतनाधातुः सत्वकरणो गुणग्रहणाय प्रवर्तते स हि हेतुः, कारणं निमित्तं, अक्षरं, कर्त्ता, मन्ता, वेदिता, बोद्धा, द्रष्टा, धाता, ब्रह्म, विश्वकर्मा, विश्वरूपः, पुरुषः, प्रभवः, अव्यक्त, नित्यः, गुणी, ग्रहणं, प्रधानं अव्यक्तं, जीवः, ज्ञः, पुद्गलः चेतनावान्, विभुः, भूतात्मा, चेन्द्रियात्मा, चान्तरात्मा चेति। प्रलयात्यये सिसृक्षुर्भूतानि अक्षरभूत आत्मा सत्वोपादानः पूर्वतरम् आकाशं सृजति ततः क्रमेण व्यक्ततरगुणान्धातून्वाय्वादिकांश्चतुरः, तथा देहग्रहणेपि प्रवर्तमानः पूर्वतरमाकाशमेवोपादत्ते ततः क्रमेण व्यक्ततरगुणान्धातून्वाय्वादिकांश्चतुरः" अस्मिन्सन्दर्भे य एव चेतनाधातुः पञ्चभूतानि सृजति स एव देहं बिभर्तीति स्पष्टं जीवेश्वरयोरैक्यं दृश्यते।

निर्विकारः परस्त्वात्मा सत्वभूतगुणेन्द्रियैः।
चैतन्ये कारणं नित्यो द्रष्टा पश्यति हि क्रियाः॥

—इति च सत्वभूतगुणैः संयुक्तः परमात्मा एव जीवात्मेत्यनयोरैक्यं च स्पष्टमभिधीयते। सोयमखिलोप्यद्वैतवेदान्तसिद्धान्तः, नात्र स्वल्पोपि शङ्का-ऽवसरः। इत्थं सत्यपि परमार्थतोऽद्वैतेऽनुभूयमानं व्यावहारिकं द्वैतं किं कारणकमित्यस्योत्तरमन्विष्यापि चरके नोपलभ्यते। उपनिषदश्च "द्वितीयाद्वै भयं भवति" "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इति द्वैतं निन्दितुं प्रवृत्ता अपि द्वैतकारणकथने उदासीनाः, परिवर्तिभिः शङ्कराचार्यादिभिश्च द्वैतकारणसाम्राज्येऽविद्यादयोभिषिक्ताः।

सत्वशरीरयोर्विशेषाद्विशेषोपलब्धिः ।
सत्वं च जीवंस्पृक् शरीरेणाभिसम्बध्नाति ।
नैकः कदाचिद्भूतात्मा लक्षणैरुपलभ्यते ।
विषयोनुपलभ्यस्य तस्य नैकस्य विद्यते ॥

—इति सत्वविमुक्तस्य निर्विशेषतां ससत्वस्य सविशेषतां च प्रतिपादयता चरकेण जीवात्म-परमात्मनोरुपाधिः सत्वशब्देन निर्दिष्ट उपलभ्यते, यद्यपि "सत्वं पुनर्मनः" "सत्वोपकरणो गुणग्रहणाय प्रवर्तते, सत्वोपादानः पूर्वतरमाकाशं सृजति" इत्यादिषु पृथक्पृथगर्थबोधकत्वेन सत्वशब्द उपन्यस्तो दृश्यते, किन्तु केवलमनःपर्यायत्वस्वीकारेपि जगदुपादानरूपा गुणत्रीच्छाविरहेपि स्वीकर्तव्या स्यात् । त्रिगुणात्मकस्य तस्य निर्विकारात्मविकृतित्वापादानस्याशक्यत्वात्, सगुणस्यैव सृष्ट्यादिस्वीकाराच्च, गुणात्मिकायाः प्रकृतेर्गुणेभ्यो भेदस्तु दुर्वचोऽतः, अव्यक्तशब्देन सगुणात्मग्रहणमिव सप्रकृतिकात्मग्रहणमपि किमिति सहृदयानां हृदयानि समुद्विजयेत्, तस्माद्गुणात्मिकायाः प्रकृतेर्गुणेभ्यो भेदस्तु दुर्वचोऽतः अव्यक्तशब्देन सगुणात्मग्रहणपरायणैः सप्रकृतिकात्मग्रहणेनापि नोद्विजितव्यम् । केवलमीश्वरकृष्णादिभिरिवैकप्रकृतिस्वीकारेनास्माकमाग्रहः, आद्यान्सांख्याननुसृत्य प्रतिपुरुषं पृथक्प्रकृतिस्वीकारेणैव निर्वाहात्, उक्तं च गुणरत्नसूरिणा षड्दर्शनसमुच्चयटीकायां "मौलिक्यसांख्या हि आत्मानमात्मानं प्रति पृथक्प्रधानं वदन्ति" इति । चरकेण तु वेदान्तानामिव स्वस्य मोक्षार्थमप्रवृत्तत्वान्निर्विशेषात्मप्रपञ्चमकृत्वा

संयोगः पुरुषस्येष्टो विशेषो वेदनाकृतः ।
वेदना यत्र नियता विशेषस्तत्र तत्कृतः ॥

—इति संयोगपुरुषस्य विशेषः, सोयं संयोगपुरुष एव कर्मपुरुषो राशिपुरुषश्चोक्तः

प्रभवो न ह्यनादित्वाद्विद्यते परमात्मनः ।
पुरुषो राशिसंज्ञस्तु मोहेच्छा द्वेषकर्मजः ॥

—इति राशिपुरुषस्य मोहेच्छाद्वेषकर्मजत्वं तस्य चानित्यत्वम् "अनादिः पुरुषो नित्यो विपरीतस्तु हेतुजः" इति स्वयमेवोक्तम् । राशिपुरुषस्तु—

बुद्धीन्द्रियमनोर्थानां विद्यायोगधरं परम् ।
चतुर्विंशतिको ह्येष राशिः पुरुषसंज्ञकः ॥

—इति चतुर्विंशतितत्वात्मक उक्तः, एतस्य राशिपुरुषस्य साधनानि—

करणानि मनोबुद्धिर्बुद्धिकर्मेन्द्रियाणि च ।
कर्तुः संयोगजं कर्म ... ... ॥
नैकः प्रवर्तते कर्तुं भूतात्मा नाश्नुते फलम् ।
संयोगाद्वर्तते सर्वं तमृते नास्ति किञ्चन ॥

इत्युक्तानि ।

आत्मनः कर्तृत्वं भोक्तृत्वं च सत्वाधीनमिति पुरस्तात्प्रतिपादितमेव। मनो बुद्धिरिन्द्रियाणि चात्मनः करणानि तैः संयोगे कर्तृत्वं भोक्तृत्वं च वियोगे च कर्तृत्वभोक्तृत्वविरहः। किन्तु करणविरहेपि नात्मनो ज्ञानविरहो ज्ञानस्यात्मगुणत्वात् । न चौपनिषदानामिवात्मा ज्ञानरूपः "चेतनावान्यतश्चात्मेति" गुणवत्वोक्तेः, आत्मनश्च द्रव्यत्वप्रतिज्ञा च गुणवत्व एव सुसङ्गच्छेत "आत्मा च सगुणश्चेतश्चिन्त्यं च हृदि-संस्थितम्" इति सगुणत्वाभिधानाच्च। "सत्वभूतगुणेन्द्रियैश्चैतन्ये कारणम्" अतएव सत्वादीनां ज्ञानकारणानां सर्वत्रासम्भवात् सर्वगतेऽप्यात्मनि न सर्वत्र प्रदेशे ज्ञानं भवति, तदुक्तम्

आत्मा ज्ञः करणैर्योगाज्ज्ञानं त्वस्य प्रवर्तते ।
करणानामवैमल्यादयोगाद्वा न वर्तते ॥
पश्यतोपि यथादर्शे संक्लिष्टे नास्ति दर्शनम् ।
तत्वं जले वा कलुषे चेतस्युपहते तथा ॥ इति

नचैतावताऽऽत्मनो ज्ञानाभाव आक्षेप्यः, न चात्मा सत्स्विन्द्रियेषु ज्ञः असत्सु वा भवत्यज्ञः।

न कर्तुरिन्द्रियाभावात्कार्यज्ञानं प्रवर्तते ।
या क्रिया वर्तते भावैः सा विना तैर्न वर्तते ॥
जानन्नपि मृदोऽभावात्कुम्भकृन्न प्रवर्तते ।

--इति शङ्कराचार्येणाप्युक्तं "विषयाभावादियमचेतयमानता न चैतन्याभावात्, अनभिव्यक्तिर्न स्वरूपाभावात्तद्वत्" इति ब्र० सू० २-१३-१८

इन्द्रियाणि च संक्षिप्य मनः संक्षिप्य चञ्चलम् ।
प्रविश्यात्मानमात्मज्ञः स्वे ज्ञाने पर्यवस्थितः ॥
सर्वत्रावहितज्ञानः सर्वभावान्परीक्षते ।
निवृत्तेन्द्रियवाक्चेष्टः सुप्तः स्वप्नवगतो यदा ॥
विषयान्सुखदुःखे च वेत्ति नाज्ञोऽयतः स्मृतः ।
नात्मज्ञानादृते चैकं ज्ञानं किञ्चित्प्रवर्तते ।
ज्ञः साक्षीत्युच्यते नाज्ञः साक्षी त्वात्मा यतः स्मृतः ॥

सर्वे भावा हि सर्वेषां भूतानामात्मसाक्षिकाः "इत्यनेन प्रमाणपुञ्जेन नित्यं स्वाभाविक चात्मनो ज्ञातृत्वं सोपाधिकं च कर्तृत्वं भोक्तृत्वमिति वेदान्तानुसारी चरकसिद्धान्तो दृश्यते ।

तस्माच्च विपर्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य ।
कैवल्यं माध्यस्थ्यं, द्रष्टत्वमकर्तृभावश्च ॥

—इत्यनेनोक्तः साङ्ख्यानामिव चरकस्यापि पुरुषो ज्ञः । वैशेषिकैर्नैयायिकैस्तु "आत्मेन्द्रियार्थसन्निकर्षाद्यन्निष्पद्यते तदन्यत् [ वै० सू० ३-१-१८ ] इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिंगम् [ न्या० सू० १-१-१० ] इति ज्ञानस्यात्मलिङ्गता स्वीकृता, भूतात्मविषयस्तु चरकस्याभिप्रायः साङ्ख्यवेदान्तानुगामीव विद्यते । वेदान्तिभिश्च "ज्ञोऽतएव" इत्यात्मनश्चैतन्यं स्पष्टीकृतम् । यद्यपि, आत्मनोऽनादिनित्यत्वे सकलास्तिकदर्शनसंमते तथापि नैयायिका वैशेषिकाश्चात्मनः कर्तृत्वं भोक्तृत्वमित्युभयं, साङ्ख्या यौगिकाश्च "पुरुषोस्ति भोक्तृभावात्" [सां० का० १७] द्रष्टृत्वमकर्तृभावश्च [ सां० का० १६ ]

इत्यकर्तृत्वेपि भोक्तृत्वं, वेदान्तिनश्च अकर्तृत्वमभोक्तृत्वञ्च वर्णयन्ति "कर्ता शास्त्रार्थवत्वात्" [ब्र० सू० २-३-३३] "यथा च तक्षोभयथा" [ ब्र० सू० २-३-४० ] इति। सोपाधिकं कर्तृत्वं चरकमतेपि करणाधीनमिति तूक्तमेव, तथैव ज्ञातृत्वमपि "नचात्मा सत्स्विन्द्रियेषु ज्ञः असत्सु वा भवत्यज्ञः, न ह्यसत्वः कदाचिदात्मा, सत्वविशेषाच्चोपलभ्यते ज्ञानविशेषः" इत्यनेन करणाधीनमिवाभाति। बुद्ध्यात्मसंयोगादात्मनो ज्ञत्वमिति वैशेषिकाभिप्रायः। आत्मनः साक्षित्वं ज्ञत्वं मनोबुद्ध्यादिभिः संयोगात्कार्यज्ञानं चेत्येतत्सर्वम् साङ्ख्याभिमतम् तथाचात्रात्मविषये बहुविधानि वचनानि परस्परविरुद्धाभिप्रायप्रतिपादकानीव दृश्यन्ते। सत्वात्मसंयोगोऽयमनादिर्मोक्षपर्यन्त स्थायीति" सांख्यवेदान्तसिद्धान्तः अत्र हि शङ्करवचनम् "यावदयमात्मा संसारी भवति यावदस्य सम्यग्दर्शनेन संसारित्वं न निवर्तते तावदस्य बुद्ध्या संयोगो न शाम्यतीति" ( ब्र० सू० २-३-३० ) नैकः प्रवर्तते कर्तुं भूतात्मा नाश्नुते फलमिति भूतात्मनः कर्तृत्वं भोक्तृत्वं च चरको निषेधति। अन्विष्यमाणापि शङ्कराचार्यस्याविद्या चरके न दृष्टिपथमवतरति। केवलं साङ्ख्यानां प्रकृति-पुरुष-संयोग इव चरकस्यात्मनः सत्वादिभिः सह संयोगः सर्वव्यवहारनिर्वाहक इत्यभिप्रायः। कतृत्वभोक्तृत्वादिव्यवहारस्य जीवच्छरीरे विद्यमानत्वान्निष्प्रयोजनोयं केवलचेतनाधातुस्वरूपस्य पुरुषस्य स्वीकार इति लोकायतिकप्रवर्तितः शङ्कातङ्क इहापि प्रवर्तेत। लोकायतिका हि आत्मपुनर्जन्मादिविमुखा बभूवुः, तेषां सिद्धान्ता सर्वदर्शनसंग्रहे महाभारते च यथायथमुट्टङ्किता उपलभ्यन्ते यथा—

> यदि प्राणयति वायुर्वायुरेव विचेष्टते।
> श्वसित्याभासते चैव तस्माज्जीवो निरर्थकः॥
> जन्तोः प्रमीयमाणस्य जीवो नैवोपलभ्यते।
> वायुरेव जहात्येनमूष्मभावश्च नश्यति॥ (म० शा० १८४)

इति। किन्तु समग्राण्यास्तिकदर्शनानि देहादिसङ्घातभिन्नमात्मानं सत्यापयितुं प्रवर्तमानानि उपलभ्यन्ते तथा च शङ्कराचार्यः प्राणचेष्टा-

चैतन्यस्मृत्यादयश्चात्मधर्मत्वेनाभिमता आत्मवादिनां तेऽप्यत्यन्तरेव देह उपलभ्यमाना बहिश्चानुपलभ्यमाना असिद्धे देहव्यतिरिक्ते धर्मिणि देहधर्मा एव भवितुमर्हन्ति, तस्माद्व्यतिरिक्तो देहादात्मा इति । एवं प्राप्ते ब्रूमः, यदि देहभावे भावाद्देहधर्मत्वमात्मधर्माणां मन्येत ये हि देहधर्मा रूपादयस्ते यावद्देहं भवन्ति प्राणचेष्टादयस्तु सत्यपि देहे मृतावस्थायां न भवन्ति, न हि भूतचतुष्टयव्यतिरेकेण लोकायतिकः किञ्चित्तत्वं प्रत्येति यदनुभवनं भूतभौतिकानां तच्चैतन्यमितिचेत्तर्हि विषयत्वात्तेषां न तद्धर्मत्वमश्नुवीत स्वात्मनि क्रियाविरोधात्, विषयीक्रियन्ते तु बाह्याध्यात्मकानि भूतभौतिकानि चैतन्येन, अतश्च यथैवास्या भूतभौतिकविषयाया उपलब्धेर्भावोऽभ्युपगम्यते एवं व्यतिरेकोऽप्यस्यास्तेभ्योऽभ्युपगन्तव्यः, उपलब्धिस्वरूप एव च न आत्मा, इत्यात्मनो देहव्यतिरिक्तत्वम्, अपि च सत्सु प्रदीपादिषूपकरणेषूपलब्धिर्भवत्यसत्सु न भवति न चैतावता प्रदीपादिधर्म एवोपलब्धिर्भवति । एवं सति देह उपलब्धिर्भवति असति च न भवतीति न देहधर्मो भवितुमर्हति तस्मादनवद्यं देहव्यतिरिक्तस्यात्मनोऽस्तित्वम् ( ब्र० सू० ३-३-५३-५४ ) ।

चरकेणाप्यनात्मवादखण्डने प्रचुरं पुरुषायितम्, तथाहि—

> भास्तयः सत्यमनृतं वेदाः कर्म शुभाशुभम् ।
> न स्युः कर्त्ता च बोद्धा च पुरुषो न भवेद्यदि ॥
> नाश्रयो न सुखं नार्तिर्नगतिर्नागतिर्नवाक् ।
> न विज्ञानं न शास्त्राणि न जन्ममरणं न च ॥
> न बन्धो न च मोक्षः स्यात्पुरुषो न भवेद्यदि ।
> कारणं पुरुषस्तस्मात्कारणज्ञैरुदाहृतः ॥
> न चेत्कारणमात्मा स्याद्भादयः स्युरहेतुकाः ।
> न चैषु सम्भवेज्ज्ञानं न च तैः स्यात्प्रयोजनम् ॥
> कृतं मृद्दण्डचक्रैश्च कुम्भकाराद्वने घटम् ।
> कृतं मृत्तृणकाष्ठैश्च गृहकाराद्विना गृहम् ।
> यो वदेत्स वदेद्देहं सम्भूय करणैः कृतम् ॥

विना कर्तारमज्ञानाद्युक्त्यागमबहिष्कृतः ।
कारणं पुरुषः सर्वैः प्रमाणैरुपलभ्यते ॥
येभ्यः प्रमेयं सर्वेभ्य आगमेभ्यः प्रमीयते ।
न ते तत्सदृशास्त्वन्ये पारम्पर्यसमुत्थिताः ॥
सारूप्याद्ये त एवेति निर्दिश्यन्ते नवा नवाः ।
भावास्तेषां समुदयो निरीशः सत्वसंज्ञकः ॥
कर्ता भोक्ता न स पुमानिति केचिद्व्यवस्थिताः ।

—इति लोकायतिकमतस्य बौद्धमतस्य च सङ्क्षेपं निर्दिश्य खण्डन-प्रवृत्तश्चरक आह—

तेषामन्यैः कृतस्यान्ये भावाभावैर्नवाः फलम् ।
भुञ्जते सदृशाः प्राप्तं यैरात्मा नोपदिश्यते ॥
करणान्यान्यता दृष्टा कर्तुः कर्ता स एव तु ।
कर्ता हि करणैर्युक्तः कारणं सर्वकर्मणाम् ॥
निमेषकालाद्भावानां कालः शीघ्रतरोऽत्यये ।
भग्नानां न पुनर्भावः कृतं नान्यमुपैति च ॥
मतं तत्त्वविदामेतद्यस्मात्तस्मात्स कारणम् ।
क्रियोपभोगे भूतानां नित्यः पुरुषसंज्ञकः ॥
अहङ्कारः फलं कर्म देहान्तरगतिः स्मृतिः ।
विद्यते सति भूतानां कारणे देहमन्तरा ॥
आदिर्नास्त्यात्मनः क्षेत्रपारंपर्यमनादिकम् ।

—इति न केवलो भूतात्मा कर्ता भोक्ता किन्तु स संयोगात्कर्ता भोक्ता च भवति सविशेषश्चासौ लक्षणैरुपलब्धुं शक्यः,

व्यक्तमैन्द्रियकञ्चैव गृह्यते तद्यदिन्द्रियैः ।
अतोऽन्यत्पुनरव्यक्तं लिङ्गग्राह्यमतीन्द्रियम् ॥

—इत्यतीन्द्रियस्यात्मनो न केवलमागमग्राह्यत्वं किन्त्वनुमानग्राह्यत्वं चोक्तम् । अनुमानसिद्धये लिङ्गानि चोक्तानि

प्राणापानौ निमेषाद्या जीवनं मनसो गतिः ।
इन्द्रियान्तरसञ्चारः प्रेरणं धारणं च यत् ॥
देशान्तरगतिः स्वप्ने पञ्चत्वग्रहणं तथा ।
दृष्टस्य दक्षिणेनाक्ष्णा सव्येनावगमस्तथा ॥
इच्छा द्वेषः सुखं दुःखं प्रयत्नश्चेतना धृतिः ।
बुद्धिः स्मृतिरहङ्कारो लिङ्गान्येतानि जीवतः ॥
न मृतस्यात्मलिङ्गानि तस्मादाहुर्महर्षयः ।
शरीरं हि गते तस्मिन्शून्यागारमचेतनम् ॥
पञ्चभूतावशेषत्वात्पञ्चत्वगतमुच्यते । इति ।

एतानि लक्षणानि सजीवत्वं शरीरस्य सूचयन्ति । उपनिषदीषण एव जीविष्यन्नशीतो मरिष्यन्" तदनुसारिणा ब्रह्मसूत्रकृता "अस्यैव चोपपत्तेरेष ऊष्मा" इत्युदाहृतम् । आगोपालबालं व्यवह्रियमाणं शरीरस्य सजीवत्वप्रतिपादकमुष्णत्वं वैद्येनापि सता चरकेण नाम्नातमिति महदाश्चर्यावहम् । चरको वेदान्तप्रक्रियामाश्रित्य भूतात्मानं न्यायवैशेषिकप्रक्रियाञ्चाश्रित्य राशिपुरुषमतिष्ठिपत्, तत्रापि राशिपुरुषलक्षणान्युपाददानो "लिङ्गानि परमात्मनः" इति राशिपुरुषविषयेऽपि परमात्मशब्दं प्रयुञ्जानोऽनयोरभेदं व्यनक्तीति समाधेयम् 'प्राणापानौ' इत्यादिना यानि लक्षणान्युक्तानि तानि "प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि" ( वै० सू० ३-२-४ ) इति वैशेषिके दृश्यन्ते केवलमत्र प्रेरणं धारणं च न लभ्येते । चरकेण सूत्रोक्त उन्मेष आद्यशब्देन गृहीतः, इन्द्रियान्तरविकारस्य स्थाने इन्द्रियान्तरसञ्चारश्च कृतः । चेतना बुद्धिश्चोक्ते चेतनाशब्देन बुद्धेर्गतार्थत्वात्पुनरुक्तिर्मा प्रसज्यतेति टीकाकृद्भिः "यद्यपि बुद्धिशब्देन चेतनाधृतिस्मृत्यहङ्काराः प्राप्यन्त एव बुद्धिप्रकारत्वेन तथापि पृथक्पृथगर्थगमकत्वेन पुनः पृथगुपात्ताः, तथाहि चेतनागुणत्वे-

नाचेतनखादिभूतातिरिक्तधर्मेणात्मानं गमयति, बुद्धिस्तूहापोहयोरेकं कारणं गमयत्यात्मानम्" इति समाहितम्। न्यायसूत्रकृत्तु बुद्धिपर्यायं ज्ञानं सुखदुःखादिभिः सह इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम् ( न्या० सू० १-१-१० ) इत्यात्मनो लिङ्गत्वेन ग्राहयति। स्मरणं त्वात्मनो ज्ञस्वाभाव्यात् ( न्या० सू० ३-२-४१ ) इति स्मृतिं चात्मलिङ्गत्वेन निर्दिश्यापि लिङ्गपरिगणनप्रस्तावे तस्या बुद्ध्या गतार्थतां ज्ञापयति। "अहमिति प्रत्यगात्मनि भावात्परत्राऽभावादर्थान्तरप्रत्यक्षः (वै० सू० ३-२-१४) इति वैशेषिकैरर्थतोहङ्कारस्यात्मलिङ्गतोक्ता, "प्रेरणं धारणं च प्रयत्नभेदः" ( न्या० सू० ३-५-३६ ) परतन्त्राणि भूतेन्द्रियमनांसि धारणप्रेरणव्यूहनक्रियासु प्रयत्नवशात्प्रवर्तन्ते [ न्या० सू० ३-२-४० ] इति वात्स्यायन आह। स्वप्ने देशान्तरसञ्चारः पञ्चत्वग्रहणं चरकेणाधिके उक्ते तत्रापि स्वप्ने देशान्तरसञ्चारः तद्यथा महामत्स्य उभे कूले अनुसञ्चरति पूर्वञ्चापरञ्चैवमेवायं पुरुष एतावुभावन्तावनुसञ्चरति स्वप्नान्तं च बुद्धान्तं च [ बृह० ४-३-१८ ] इति श्रुतिमूलकः स्यात्। दृष्टस्य दक्षिणेनादृणा सव्येनावगमस्तथेत्युक्तं लिङ्गं तु गौतमेन सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात्" [ न्या० सू० ३-१-७ ] इति देहव्यतिरिक्तात्मसाधकत्वेनोपात्तम्। प्राणापानौ श्वासरूपौ तौ च निमेषोन्मेषौ च प्रयत्नाः तेषां प्रयत्ने समावेश उचितो नात्र पृथग्गणनार्हाः। प्राणोदानसमानाख्यव्यानापानैः स पञ्चधा [ च० चि० २८ ] इत्यन्यत्र स्वयं पञ्चधाऽभिहितोपि वायुरत्र वैशेषिकैरिव प्राणापानात्मा द्विविध एवाङ्गीकृतः। उपस्कारकृच्छङ्करमिश्रो जीवनपदेन लक्षणया जीवनकार्यं वृद्धिक्षतभग्नसंरोहणादि लक्षयतीत्याह; एतस्यापि प्रयत्ने समावेश उचितः।

वेदान्तिनामात्मा निर्विशेषचैतन्यात्मोपलब्धिरूपोऽकर्ताऽभोक्ता, साङ्ख्यानामकर्ता सन्नपि भोक्ता, न्यायवैशेषिकाणां कर्ता भोक्ता ज्ञाता चेति पुरस्तात्प्रतिपादितमेव, तत्र नैयायिकैर्ज्ञानेन ज्ञातृत्वं, सुखदुःखाभ्यां भोक्तृत्वमिच्छाद्वेषादिभिश्चात्मनः कर्तृत्वमुपपादितम्। जीवच्छरीरात्कृतेचाचेतनशरीरेन्द्रियमनःकार्याणां परिहारे यदवशिष्यते यच्चानुभवन्नपि

मनुजो विवेक्तुं न शक्नोति तदात्मलिङ्गत्वेन न्यायसूत्रकृतोपात्तम्। न च न्यायवैशेषिकसमये लक्षणैरनुपलभ्य आत्मा विद्यतेऽतस्तन्मते लक्षणैरनुमानप्रमाणेनैवात्मसिद्धिः सुतरां सङ्गच्छते। चरकेण तु लक्षणै-रनुपलभ्यो भूतात्माऽभ्युपगम्यते, पुनः कोसौ यो लक्षणैरुपलभ्य उक्तः? न च राशिपुरुष इति वक्तुं पार्यते, तस्य मन इन्द्रियादीनां राशिरूपत्वात्, उक्तानि लिङ्गानि त्विन्द्रियविरहितस्यैव सम्भवन्ति, अतोऽध्यात्मद्रव्य-संग्रहोक्तश्चतुस्तत्वात्मकश्चेतनाधातुश्चरकस्य लक्ष्यभूतः संभावनीयः।

चरकेणान्यत्र "उत्साहोच्छ्वासनिःश्वासश्चेष्टाधातुगतिः समा" इति [ च० सू० १८-३६ ] उच्छ्वासनिश्वासौ वायोः कर्मत्वेनोक्तौ, इह पुन-रात्मलिङ्गत्वेन, तथा मनसो गतिरिहात्मलिङ्गत्वेनोक्ता सान्यत्र "नियन्ता प्रणेता च मनसः [ च० सू० १२-८ ] इति वाय्वधीनतयोक्ता, न केवलं शारीरक्रिया अपितु मानसक्रिया अपि वातपित्तकफाधीना इत्युक्तम्, एवं सत्वावजयश्च चिकित्साङ्गत्वेनोक्तः, इत्येष प्रमादो वैशेषिकानुसार-णेनैव जात इत्यनुमीयते। "इन्द्रियान्तरविकारः" "दृष्टस्य दक्षिणेनाक्ष्णा सव्येनाक्ष्णा परिग्रहः" इत्यनयोः शरीरव्यतिरेकेणात्मप्रतिपादकलिङ्गत्वेन न्यायसूत्रकृदुक्तिश्चरकस्य केवलात्मलिङ्गत्वप्रतिपादकोक्तेर्बलीयसी-वाभाति।

## अन्तःकरणम्—

भगवान्पुनर्वसुः "करणानि मनोबुद्धिर्बुद्धिकर्मेन्द्रियाणि च" [ च० शा० १-५६ ] इति श्रोत्रत्वक्चक्षूरसनघ्राणानि वाक्पाणिपाद-पायूपस्थानि मनोबुद्धिश्चात्मनो द्वादश करणानि कण्ठरवेण परिगणयाञ्च-कार, त्रयोदशोहङ्कारश्चात्र चकारानुकर्ष्यः। सांख्यैरपि "करणं त्रयोदश-विधम्" इतीन्द्रियाण्येकादश बुद्धिरहङ्कारश्चेति त्रयोदश परिगणितानि, तत्र श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानि बुद्धीन्द्रियाणि, वाक्पाणिपादपायू-पस्थाख्यानि कर्मेन्द्रियाणि, उभयात्मकञ्च मनः, तत्रापि "अन्तःकरणं त्रिविधं दशधा बाह्यम्" इति बुद्धिकर्मेन्द्रियाणां दशानां बाह्यकरणत्वं मनो-बुद्ध्यहंकाराणां त्रयाणामन्तःकरणत्वं संख्यातम्, चरकमते तु बुद्धि-

मनसोरेवान्तःकरणत्वं नत्वहङ्कारस्य करणसंग्राहकवचसि एतस्य करणत्वेनापरिगणितत्वादिति कैश्चिदुक्तं तन्न विचारचारु "बुद्ध्याहमिति मन्यते" इत्यहंक्रिया प्रोक्ता तस्याः करणस्याहङ्कारस्य बाह्यकरणताऽऽपादनमिवाबाह्यकरणताऽपलपनं च दुःशकम्, उक्तं च, सत्वपदेनान्तःकरणत्रयं मनोहङ्कारबुद्धयो लक्ष्यन्ते [ चरकप्रदीपिका ] शरीराभ्यन्तरवर्तित्वात् [ अहङ्कारस्य ] अन्तःकरणत्वम् [ वाचस्पतिः ] एतस्यान्तःकरणस्य स्वरूपकार्यप्रतिपादनपरा विविधा विचारा दार्शनिकपौराणिकग्रन्थेष्वितस्ततः सन्दर्भा उपलभ्यन्ते परं न तेऽत्रासङ्गतेर्ग्रन्थगौरवभयाच्च प्रपञ्चनार्हाः, केवलमत्र सामञ्जस्यमुपलक्ष्य चरकवचांसि विचाराय प्रस्तूयन्ते। देहादिभिन्नात्मतत्वविषयविनिर्णये चरकस्यापि न्यायाद्याश्रितदर्शनसध्र्यङ्पन्थाः, सत्यां बुद्ध्यहङ्कारस्मृतिभिः समानायां मनस आत्मलिङ्गतायां किमित्यन्तःकरणता वैशिष्ट्यमिष्यत इत्यत्र साम्प्रतिकमनोवैज्ञानिकसरणिमनुसरन्न्यायसूत्रकृद्भगवानक्षपादः "न आत्मप्रतिपत्तिहेतूनां मनसि संभवात्" ( न्या० सू० ३-१-१६ ) दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्" इत्येवमादीनामात्मप्रतिपादकानां हेतूनां मनसि संभवः, यतो मनो हि सर्वविषयमिति तस्मान्न शरीरेन्द्रियमनोबुद्धिसङ्घातव्यतिरिक्त आत्मेति" पूर्वपक्षस्य "ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम् ( न्या० सू० ३-१-१७ )। ज्ञातुः खलु ज्ञानसाधनान्युपपद्यन्ते चक्षुषा पश्यति, घ्राणेन जिघ्रति, स्पर्शनेन स्पृशति, एवं मन्तुः सर्वविषयस्य मतिसाधनमन्तःकरणभूतं सर्वविषयं विद्यते येनायं मन्यत इति, एवं सति ज्ञातर्यात्मसंज्ञा न मृष्यते मनः संज्ञाऽभ्यनुज्ञायते, मनसि च मनः संज्ञा न मृष्यते मतिसाधनसंज्ञा च मृष्यते, तदिदं संज्ञाभेदमात्रं नार्थे विवाद इति" ( वात्स्या० ) इति मनसोऽन्तःकरणतां साधयति। एवं ब्रह्मसूत्रकृद्व्यासोपि तक्षदृष्टान्तेनाशरीरतत्वविचारे मनसः करणत्वमुपपादयति "यथा च तक्षोभयथा" ( ब्र० सू० २-३-४० ) तक्षादिविशिष्टेषु तक्षणादिव्यापारेषु अपेक्ष्यैव प्रतिनियतानि करणानि चास्यादीति कर्ता भवति स्वशरीरेण स्वकर्तैव, एवमयमात्मा सर्वव्यापा-

रेष्वपेक्ष्यैव मन आदीनि करणानि कर्ता भवति" इति। प्रत्यक्षगोचरमतीन्द्रियं मनः केवलमनुमानेन सिषाधयिषुरात्रेयो लिङ्गमाह

लक्षणं मनसो ज्ञानस्याभावो भाव एव च।
सति ह्यात्मेन्द्रियार्थानां सन्निकर्षे न वर्तते॥
वैवृत्यान्मनसो ज्ञानं सान्निध्याच्च प्रवर्तते। (च० शा०–१)

—इति, यदा युगपदिन्द्रियार्था इन्द्रियैः संयुज्यन्ते तदा क्वचिदिन्द्रियार्थेन ज्ञानं भवति क्वचिच्च न भवतीति दृष्टं तेनेमौ ज्ञानभावाभावौ सत्यप्यात्मेन्द्रियार्थसन्निकर्षे किमपि ज्ञानकारणान्तरं दर्शयतः, यच्च तत्कारणान्तरं तन्मन इति। तथा च तस्य वृत्त्यन्तरव्यासक्तत्वेऽसंयुक्ते वा ज्ञानं न जायते जायते च संयुक्तत्व एव, उक्तं च "आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्याभावो भावश्च मनसो लिङ्गम् (वै० सू० ३–२–१) "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्" (न्या० सू० १-१-१६) युगपच्च खलु घ्राणादीनां गन्धादीनां च सन्निकर्षेषु सत्सु युगपज्ज्ञानानि नोत्पद्यन्ते तेनानुमीयतेऽस्ति तत्तदिन्द्रियसंयोगिसहकारि निमित्तान्तरमव्यापि यस्यासन्निधेर्नोत्पद्यते ज्ञानं सन्निधेश्चोत्पद्यत इति (वात्स्या०) चरकेणापि "तत्रात्मप्रत्यक्षाः सुखदुःखेच्छाद्वेषादयः" (च० वि० ८–३९) इति वदता सुखदुःखेच्छाद्वेषादीनां मनोगोचरता प्रतिपादिता, रूपादिभ्यश्च विषयान्तरं सुखादयः, चक्षुरादिभिः सुखादयो न गृह्यन्त इति कारणान्तरेण भवितव्यम्। यच्च सुखाद्युपलब्ध्यै करणं तच्च मन इति सिद्धम्। एतच्चात्मेन्द्रियमनोर्थसन्निकर्षात्तु सुखदुःखे" इति वैशेषिकवचनाविरुद्धम्। तच्च मन एकमुतानेकमिति न शङ्कालेशावसरः "अणुत्वमथ चैकत्वं द्वौ गुणौ मनसः स्मृतौ (च० शा० १–१९) इति सिद्धान्तं प्रतिष्ठापयिषुराचार्यः पूर्वपक्षं निराकुर्वन्नाह—"स्वार्थेन्द्रियार्थसङ्कल्पव्यभिचरणाच्चानेकमेकस्मिन्पुरुषे सत्त्वं सत्त्वगुणयोगा च, न चानेकत्वं नह्येककालमनेकेषु प्रवर्तते, तस्मान्नैककाला सर्वेन्द्रियप्रवृत्तिः" [च० सू० ८–५] तदुक्तं यद्गुणं चाभीक्ष्णं पुरुषमनुवर्तते सत्त्वं तत्सत्त्वमेवोपदिशन्ति बाहुल्यानुशयात् [च० सू० ८–६]। नानाविधानि खलु

सत्वानि तानि सर्वाणि एकपुरुषे भवन्ति न च भवन्त्येककालम्, एकं तु प्रायोवृत्याह [च० शा० ३-१३] देवदत्तयज्ञदत्तविष्णुमित्रेषु शरीरिष्वनेकं मनस्तत्कालं युगपदनेकेषु रूपादिज्ञानेषु प्रवर्तमानं दृश्यते तथैव यदि एकस्मिन्पुरुषे बहूनि मनांसि स्युस्तान्यपि युगपद्रूपादिज्ञाने प्रवर्तेरन्, न तु तथा, न च दीर्घशष्कुलीभक्षणादौ युगपत्पञ्चज्ञानोत्पत्ति-प्रतीतिरिति वाच्यम्। अलातचक्रदर्शनवद्युगपदुत्पलपत्रशतव्यक्तिभेदज्ञान-वद्भ्रान्तिरेव सेति। एवं मनसो विभुत्वे सर्वदा युगपत्सर्वेन्द्रियैः सह संयोगसत्वे युगपद्रूपादीनां सर्वेषां ज्ञानं स्यान्न च भवति तस्मादेक-मणु च मनः, तदुक्तं ज्ञानायौगपद्यादेकं मनः [न्या० सू० ३-२-५८] प्रयत्नायौगपद्याज्ज्ञानायौगपद्याच्चैकं मनः [वै० सू० ३-२-२] तदभावा-दणु मनः [वै० सू० ७-१-२३] "यथोक्तहेतुत्वाच्चाणु" [न्या० सू० ३-२-६१] इति यद्यप्येतावता ध्यानात्मकं (Attention) मनः सिद्ध्यति भगवता शङ्कराचार्येणापि भगवद्गीताभाष्ये (२-४४) समाधिरन्तः-करणमित्युक्तं तथात्वे च न भेदेन मनःस्वीकारावश्यं तथापि सुखदुःखादि-करणत्वान्यथानुपपत्त्या मनसः पार्थक्येन परिगणनं सम्प्रदायशुद्धमिति न विस्मरणीयम्। "अन्यत्रमना अभूवं नादर्शम्, अन्यत्रमना अभूवं नाश्रौषम्, मनसा ह्येव पश्यति, मनसा शृणोति" इति मनःकरणता-प्रतिपादनप्रवृत्ता श्रुतिः "कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृति-रधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इतिसङ्कल्पादिभिः समं कामं धियं च मनोधर्मत्वेन प्रत्यपीपदत्। पर्यजीगणच्चरकस्तु न्यायवैशेषिकमत-मनुवदन्नात्मलिङ्गत्वेन त एवेच्छाबुद्धी, इत्थमुपलभ्यमानेपि मनोधर्म-विषयकाभिप्रायभेदे, औपनिषदानां तदनन्तरवर्तिनाञ्च न सर्वथा मनस आत्मकरणताभिप्रायो न भिद्यते।

> इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।
> मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः॥

—इति कठोपनिषदि मनो बुद्धिश्चेति द्वयं "मनश्च मन्तव्यं च बुद्धिश्च बोद्धव्यं चाहङ्कारश्चाहङ्कर्तव्यञ्चेति" प्रश्नोपनिषदि मनोबुद्धिरहङ्कारश्चित्तं

चेति चतुष्टयमन्तःकरणत्वेनोपात्तम्। साङ्ख्यैश्चरकानुयायिभिश्च मनोबुद्धिरहङ्कारश्चेति त्रिधान्तःकरणमुक्तमिति पुरस्तादवोचाम। सांख्यैस्तु "मनः सङ्कल्पकम्" इति मनो लक्षणम् "अध्यवसायो बुद्धिः" इति बुद्धिलक्षणम्, "अभिमानोहंकारः" इत्यहङ्कारलक्षणमुक्तम्। युगपद्दृष्टस्य हि वृत्तिः क्रमश्च तस्य निर्दिष्टा। दृष्ट इति प्रत्यक्षविषये तेषां त्रयाणां युगपत्क्रमश्च प्रवृत्तिं जगुः। "वृत्तयः पञ्चतय्यः क्लिष्टा अक्लिष्टाः" (यो० सू० १-५) "प्रमाणविपर्ययविकल्पनिद्रास्मृतयः" (यो० सू० १-६) इति पातञ्जलाः पञ्चधा चित्तवृत्तिमभिदधुः, वेदन्तिभिस्तु मनोबुद्धिश्चित्तमहङ्कारश्चेत्यन्तःकरणचतुष्टयमुररीकृतं परं भगवतः शङ्कराचार्यस्य नात्र सङ्ख्यामभिलक्ष्य कोऽप्यभिनिवेश इति। तच्चात्मन उपाधिभूतमन्तःकरणं मनोबुद्धिर्विज्ञानं चित्तमिति चानेकधा तत्रतत्राभिलप्यते क्वचिच्च वृत्तिविभागेन संशयादिवृत्तिकं मन इत्युच्यते निश्चयादिवृत्तिकं बुद्धिरिति इत्युत्क्रान्त्यधिकरणस्थभाष्यादनुमीयते। वेदान्तसारकृच्च चित्तं मनसि अहंकारं च बुद्ध्यावरुद्ध्य—

पञ्च प्राणमनोबुद्धिदशेन्द्रियसमन्वितम्।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्॥

—इति साम्प्रदायिकवचनावष्टब्धमन्तःकरणद्वयं साधयाम्बभूव। भगवता चरकेणापि त्रिधान्तःकरणमुक्तमित्युक्तं प्राक्

चिन्त्यं विचार्यमूह्यं च ज्ञेयं सङ्कल्प्यमेव च।
यत्किञ्चिन्मनसो ज्ञेयं तत्सर्वं ह्यर्थसंज्ञकम्॥ (शा० १-२०)

—इति मनोविषयाः।

इन्द्रियाभिग्रहः कर्म मनसः स्वस्य निग्रहः।
ऊहो विचारश्चेति ... ... ...॥ (शा० १-२१)

मनः कर्म चोक्तम्। नात्र मनः कर्मसु सङ्कल्पानुल्लेख इति वाच्यं सत्यप्यक्षरेणानुल्लेखे, ऊहेन विचारेण वा गतार्थतामङ्गीकृत्यार्थोल्लिखसाधने न कापि क्षतिः सम्भावनीया।

इन्द्रियेणेन्द्रियार्थो हि समनस्केन गृह्यते ।
कल्प्यते मनसा तूर्ध्वं गुणतो दोषतोऽथवा ॥
जायते विषये तत्र या बुद्धिर्निश्चयात्मिका ।
व्यवस्यति तया वक्तुं कर्तुं वा बुद्धिपूर्वकम् ॥

—इति [ शा० १-२२-२३ ] बुद्धिप्रवृत्तिविवेदिपुणा महर्षिणा प्रादर्शि निखिला विषयग्रहणप्रक्रिया ।

या यदिन्द्रियमाश्रित्य जन्तोर्बुद्धिः प्रवर्तते ।
याति सा तेन निर्देशं मनसा च मनोभवा ॥ [शा० १-३२]

—इति अन्यत्र कार्येन्द्रियार्थानां भेदादुत्पद्यमानानि समग्राणि ज्ञानानि बुद्धिशब्देन निर्दिशता च बुद्धेर्ज्ञानपर्यायता साधिता । त्रिविधं खलु सत्त्वं शुद्धं राजसं तामसम् ” [ च० शा० ४-३६ ] इति गुणत्रयविशिष्टमन्तःकरणमुक्तं तच्च चेतनाशून्यम् , यदि मनश्चेतनं स्याच्छरीरभिदमात्मनः साधारणमुपभोगसाधनं स्यात् , तथा च पृथक्पृथगभिप्रायानुरूपमितस्ततः आकृष्यमाणं बहुनायकं राज्यमिवोन्मथ्येत, नचैवमस्ति एकाभिप्रायेणैव तस्य प्रवृत्तिनिवृत्तिदर्शनात्तस्मादचेतनमेव मनः । प्रशस्तपादेनाप्यत्र साधारणे विग्रहवत्वप्रसङ्गादज्ञत्वमगादि । चरकेणैतत्सर्वमभिसन्धायोक्तं—

अचेतनं क्रियावच्च मनश्चेतयिता परः ।
युक्तस्य मनसा तस्य निर्दिश्यन्ते विभोः क्रियाः ॥
चेतनावान्यतश्चात्मा तत्र कर्ता निरुच्यते ।
अचेतनत्वाच्च मनः क्रियावदपि नोच्यते ॥

—इति [ च० शा० १-७५-७६ ] । तच्छरीरस्य तन्त्रकमात्मसंयोगादिति करणत्वादात्मतन्त्रं चैतदिति ।

## इन्द्रियाणि—

पञ्च बुद्धीन्द्रियाणि तद्यथा स्पर्शनं रसनं घ्राणं दर्शनं श्रोत्रमिति [ च० शा० ७-७ ] हस्तौ पादौ गुदोपस्थं वागिन्द्रियमथापि च । कर्मेन्द्रि-

याणि पञ्चैव इति [ च० शा० १-२५ ] चरकेण सांख्यैर्वेदान्तिभिरिव पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणीति दशेन्द्रियाणि तथा सांख्यैरिव मनस एकादशेन्द्रियता च स्वीकृता, एतदभिलक्ष्य कर्मेन्द्रियखण्डनं जयन्तभट्टेन न्यायमञ्जर्यां विस्तरेणोक्तं तत्ततोवलोक्य केवलं वाचकमनोविनोदार्थं संक्षेपोत्र निदर्श्यते। अत्यल्पमित्युच्यते पञ्च कर्मेन्द्रियाणीति, अन्यान्यपि खलु न सन्ति कर्मेन्द्रियाणि? तथाहि—

> कण्ठोऽन्ननिगरणे, स्तनकलशालिङ्गनादिना वक्षः।
> भारवहनेन चांसद्वयमिन्द्रियमुच्यते न कथम्?

तत्कार्यस्य शरीरावयवान्तरेऽपि दर्शनादितिचेत्किन्नु भवानन्नपानं पाणिपादेन निगिरति पायुना वा? आदानमपि किमास्यादिना वा न कुर्वते तिर्यञ्चो मनुष्या अपि हि क्वचित्? असत्स्वपि भवत्कल्पितेष्विन्द्रियेषु तत्कार्यं यावत्तावदन्यथापि दृश्यते नत्वेवं बुद्धीन्द्रियेषु—

> भवत्युत्पाटिताक्षस्य न मनागपि रूपधीः।
> ईषद्विहारादानादि दृष्टं यन्त्राङ्घ्रिपाणिषु॥ इति

तैजसादिन्द्रियाण्येव ज्ञानकर्ममयानि च। —इति साङ्ख्यस्मृतावुभयविधानीन्द्रियाण्याहङ्कारिकाणीत्युक्तम्, वेदान्तपरिभाषायां तु "एतैश्च सत्वगुणोपेतैः पञ्चभूतैर्व्यस्तैः पृथक्पृथक्क्रमेण श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानि पञ्च ज्ञानेन्द्रियाणि जायन्ते, एतैरेव रजोगुणोपेतैर्व्यस्तैर्यथाक्रमं वाक्पाणिपादपायूपस्थाख्यानि कर्मेन्द्रियाणि जायन्ते" इति बुद्धीन्द्रियाणां कर्मेन्द्रियाणां चापञ्चीकृतभूतप्रभवत्वमुक्तम्। चरकेण तु कापिलपद्धतिं वेदान्तमार्गं च परिहाय न्यायपथमनुसृत्य पञ्चीकृतपञ्चमहाभूतेभ्य इन्द्रियाणामुत्पत्तिं प्रतिपिपादयिषुणा "तत्रापि पञ्चमहाभूतविकारसमुदायात्मकानामपि सतामिन्द्रियाणां तेजश्चक्षुषि, खं श्रोत्रे, घ्राणे क्षितिः, आपो रसने, स्पर्शनेऽनिलो विशेषेणोपपद्यते, तत्रापि यदात्मकमिन्द्रियं विशेषात्तदात्मकमेवार्थमनुगृह्णाति तत्स्वभावाद्विभुत्वाच्च" इत्युक्तम्। पाञ्चभौतिकत्वे तेजोधिकत्वाच्चक्षुस्तैजसं व्यप-

दिश्यते, एवं घ्राणादिष्वपि पृथिव्याद्यधिकत्वेन पार्थिवत्वादिव्यपदेशः, यदिन्द्रियं विशेषाद्यद्भूतारब्धं तदिन्द्रियं तदात्मकं तद्भूतात्मकमेवार्थं विषयं गृह्णातीति चक्रपाणिना तदात्मकता व्याख्याता। भूयस्त्वाद्गन्धवत्वाच्च पृथिवी गन्धज्ञाने प्रकृतिः ( वै० सू० ८-२-५ ) इति प्रतिनियतविषयग्रहणे कणभुजा भूयस्त्वमेव हेतुर्दत्तः, वात्स्यायनेन च दृष्टो हि प्रकर्षे भूयस्त्वशब्दः इति प्रकर्षवाचित्वेन भूयः शब्दो व्याख्यातः, इतरद्रव्यानभिभूतैरारब्धत्वमेव भूयस्त्वमित्युपस्कारकृताप्युक्तम्। इतरद्रव्यानभिभवो हि प्रकृष्टतया, प्रकर्षश्चाधिक्येन तच्च चरकेणात्र विशेषशब्देनाभिहितम्। भूयस्त्वस्य शक्तत्वरूपार्थस्वीकारेऽपि चरकोक्तेर्नाल्पतो विभुत्वादिति तदुक्तेः, तस्य च शक्ततत्वादिति व्याख्यानोपलब्धेश्चेति। अत्र न्यायवैशेषिकाभ्यां समं चरकस्य विरोध इति कैश्चिदकाण्डताण्डवितपाण्डित्यैर्वृथैव जल्पितमिति प्रतिभाति। "यैरेवेन्द्रियैः प्रत्यक्षमुपलभ्यते तान्येव सन्ति चाप्रत्यक्षाणि" ( च० सू० ७) "पञ्चकर्मानुमेयानि" ( च० शा० १-२२ ) इति इन्द्रियाणामप्रत्यक्षताऽनुमेयता चोक्ते, ननु "तत्रैकं स्पर्शनमिन्द्रियाणामिन्द्रियव्यापकं चेतः समवायि" इति एकमिन्द्रियं पूर्वं च पञ्चेन्द्रियाणीति परस्परविरोध इति चेन्न, महर्षिणा स्वयमसात्म्येन्द्रियार्थसंयोग एक उक्तः, इन्द्रियाणि तु पञ्च, तथा च प्रतिनियतैः पञ्चभिरसात्म्येन्द्रियार्थसंयोगैर्भाव्यं न च तथा, अस्य विरोधस्य परिजिहीर्षया स्पर्शनेन्द्रियस्य सर्वेन्द्रियव्यापकत्वमभिधाय सर्वेन्द्रियानुगतं स्पर्शमर्थग्रहणकारणमेकरूपं दर्शयति ततश्च तस्यैकस्यासात्म्येन्द्रियार्थेन संयोगादुपपन्न एकरूपोऽसात्म्येन्द्रियार्थसंयोगः" इति चक्रपाणिप्रतिपादितः समाधिरत्रानुसन्धेय इति। कैश्चिदिदं चरकवचनं चक्रपाणिव्याख्यानं चैकेन्द्रियवादपरमित्यभिधीयते तत्तु ग्रन्थरहस्याकलपनाऽभावसम्भवमिति नादरणीयम्, तथाहि—नात्रैकमिन्द्रियं विधीयते परन्तु स्पर्शनेन्द्रियस्य व्यापकत्वं विधीयते, व्याख्यतञ्चैतत्तथैव चक्रपाणिना "इन्द्रियाणामिति निर्धारणे षष्ठी, इन्द्रियाणि चक्षुरादीनि व्याप्नोतीतीन्द्रियव्यापकं, स्पर्शनं हि सर्वेष्विन्द्रियेष्वस्ति, अतएव स्पृष्टं घा-

र्थमिन्द्रियाण्यर्थं गृह्णन्ति, व्यापकश्चासौ स्पर्शश्चेति तेन कृतस्तन्निबन्धनः सर्वेन्द्रियाणां भावविशेषः स्वभावविशेषोऽर्थग्रहण कारणीभूतः स्पर्श इत्यर्थं इति, न चात्र स्पर्शनेतरेषामिन्द्रियाणां निषेधश्चरकस्य चक्रपाणेर्वाभिमतो दृश्यते,

> स्पर्शनेन्द्रियसंस्पर्शः स्पर्शमान स एव च ।
> द्विविधः सुखदुःखानां वेदनानां प्रवर्तकः ॥

—इति द्विविधः स्पर्शः सुखदुःखप्रवर्तकत्वेनोक्तः, तच्चोपपादयितुं "नात्मेन्द्रियमनोबुद्धि गोचरं कर्म वा विना सुखदुःखम्" इत्यात्मेन्द्रियमनोबुद्धिविषयकर्माणीति षट् कारणान्युपन्यस्तानि, अत्र स्पर्शनेन्द्रियसंस्पर्श इत्यनेनेन्द्रियाणामर्थेन सम्बन्धं स्पर्शनेन्द्रियकृतं दर्शयति, चक्षुरादीन्यपि स्पृष्टमेवार्थं जानन्ति नास्पृष्टम्, यदि ह्यस्पृष्टमेव चक्षुः श्रोत्रं घ्राणं वा गृह्णाति तदा विदूरस्थमपि गृह्णीयात् न च गृह्णाति तस्मात्स्पृष्ट्वैव विषयमिन्द्रियाणि प्रतिपद्यन्ते, मानसस्पर्शोपि चिन्त्यादिनाऽर्थेन समं सूक्ष्मोऽस्त्येव, येन मनः किञ्चिदेव चिन्तयति न सर्वम् । उक्तं च वृद्धजीविकीये "मनः षष्ठानामिन्द्रियाणां त्रीणि त्रीणि च विप्रकृष्टवृत्तीनि । मनः चक्षुः श्रोत्रं विप्रकृष्टवृत्तीनि । घ्राणं रसनं त्वगिति सन्निकृष्टवृत्तीनि तत्सर्वं स्पर्शनलक्षणमाहुः" इति ।

## जगद्धेतुः—

सुखदुःखे वेदनाधिष्ठानं च "वेदनानामधिष्ठानं मनो देहश्च सेन्द्रियः" इति सेन्द्रियं समनःशरीरमभिहितम् । केशनखादीनामपि शरीरावयवत्वेन शरीरत्वात्तत्र वेदनानुभवस्याभावादतिव्याप्तिप्रसक्तिं निवारयिष्यन्नाह "केशलोमनखाग्रान्नमलद्रवगुणैर्विना" इति । ननु स्पर्शनेन्द्रियसंस्पर्शो मानसस्पर्शश्च वा केवलं दुःखकारणं चेन्नकोप्यसुखैर्भावैराक्रान्त उपलभ्येतासुखकरस्पर्शं परिहरन्सुखप्रदस्पर्शमेवोपसेवमानः, उपलभ्यते च, तस्मात्केनापि कारणान्तरेण भाव्यं येनानभिलषितोपि दुःखस्पर्शो हठादायाति इति, तच्च कर्म, आह हि—

वशी तत्कुरुते कर्म यत्कृत्वा फलमश्नुते ।
वशी चेतः समाधत्ते वशी सर्वं निरस्यति ॥ इति ।

न च कर्ता च कर्मपरपन्त्रश्चेति युक्तियुक्तम्, कर्तुः स्वातन्त्र्ये हि पुण्यापुण्यव्यवस्था सङ्गच्छते । परतन्त्रो यदि कर्ता येन प्रयुक्तः पुण्यपापे विदध्यात्तयोः शुभाशुभं फलं च तस्मिन्प्रयोक्तर्यनुसज्येत । योद्धं प्रयोक्तरीव वीराणां जय-पराजयौ, तस्मात्कर्ता स्वतन्त्रो हि भवति । न च स्वातन्त्र्ये किमित्यसुखोदर्कं कर्म कुर्यादिति घट्टकुटीप्रभातन्यायापातः "उपधा हि परो हेतुर्दुःखदुःखाश्रयप्रदः" इति तृष्णा च सर्वानर्थहेतुरित्युक्तम्, सा च न केवलं सुखप्राप्तिरूपा किन्तु दुःखपरिहाररूपापि, तदुक्तं—

इच्छा द्वेषात्मिका तृष्णा सुखदुःखात्प्रवर्तते ।
तृष्णा च सुखदुःखानां कारणं पुनरुच्यते ॥
उत्पादयते हि सा भावान्वेदनाश्रयसंज्ञकान् ।

—इति सुखदुःखजननी तृष्णा सुखदुःखे प्रसूयते । उक्तं च—

तृष्णाबद्धं जगत्सर्वं चक्रवत्परिवर्तते ॥ इति ।

"काममय एवायं पुरुष इति स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसम्पद्यते" ( बृहदारण्यक० ) इति ।

एष हि एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते, एष हि एवासाधु कर्म कारयति तं यमधो निनीषते" ( कौषी. ) इति ।

अज्ञो जन्तुरनीशोयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेच्छ्वभ्रं वा स्वर्गमेव वा ॥

—इति श्रुतिस्मृतीरनुसृत्य यैरीश्वरपारतन्त्र्यं जगत उच्यते तैरपीश्वरस्थ-वैषम्यनैर्घृण्यनिराकरणाय, इष्टानिष्टप्राप्तिपरिहारार्थिनो जीवात्मनो विहित-निषिद्धकर्मणि स्वातन्त्र्यं वीतरागस्येश्वरस्य च पूर्वापूर्वजन्तु-कर्मापेक्षया जन्तून्धर्माधर्मयोः प्रवर्तयतो जीवकर्मपारतन्त्र्यमुररीकृतम् । एतच्च वेदान्तदर्शनद्वितीयाध्यायतृतीयपादे "परात्तु तच्छ्रुतेः" इत्या-

श्विना परायत्ताधिकरणे, न्यायदर्शनचतुर्थाध्यायप्रथमाह्निके "ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात्" इत्यादिना विस्तरेण प्रतिपादितं तत्ततोऽवगन्तव्यम् ।

त्यागः सर्वोपधानाञ्च सुखदुःखव्यपोहकः ।
कोषकारो यथा ह्यंशूनुपादत्ते वधप्रदान् ॥
उपादत्ते तथाऽर्थेभ्यस्तृष्णामज्ञः सदातुरः ।
यस्त्वग्निकल्पानर्थाञ्ज्ञो ज्ञात्वा तेभ्यो निवर्तते ॥
अनारम्भादसंयोगात्तं दुःखं नोपतिष्ठते । (च० शा० १)

—इत्यादिना च भोगतृष्णा च सकलदुःखकारणमित्युक्तम्, अज्ञो हि रागद्वेषप्रयुक्तोऽनर्थरूपेभ्योऽर्थेभ्यः संसारदुःखग्रहीतः परं परं लाभं लिप्समानस्तृष्णां निखिलदुःखजननीमेवोपादत्ते, तृष्णया च प्रवर्तते, प्रवर्तमानश्च धर्माऽधर्मावुपादत्ते, धर्माधर्माभ्यां च दुःखाश्रयं शरीरमेवं तिलपीडकवत्परिवर्तमानो न मुच्यत इति, सर्वोपधात्यागात्तु न रागद्वेषाभ्यां क्वचित्प्रवर्तते, अप्रवर्तमानश्च न धर्माधर्मावुपादत्ते, एवमनागतधर्माधर्मौ परमो भवति, उपात्तधर्माधर्मयोस्तु रागद्वेषशून्यस्योपभोगादेव क्षयः, तेन सर्वथा कर्मक्षयाद्दुःखशरीराऽभाव इति तृष्णाया निखिलदुःखकारणत्वमुपपादयता प्रकटितं परमकारणत्वमज्ञानस्य, यच्च तृष्णाया अपि मूलमिति निश्चप्रचम् । अज्ञानमेवाविद्याशब्देन व्याहृतमाकरे इति ।

## मुक्तिसाधनम्—

अयमौपनिषदानां परमः सिद्धान्तो यज्ज्ञानमेव मुक्तिसाधनमिति, "ब्रह्म वेद ब्रह्मैव भवति" ( मुण्डक० ३-२-६ ) "ब्रह्मविदाप्नोति परम्" ( तैत्तिरीय० ) "ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति" [ बृह० ] ।

आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।
किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ॥

[ बृह० ४-४-१२ ] इति ज्ञानेनैव मुक्तिप्रतिपादनात्। कामनिवृत्तावेव ज्ञानोत्पत्तिं कामस्य ज्ञाननिवर्त्यत्वं च श्रुतौ प्रतिपादितं तथाहि—

यदा सर्वे प्रमुच्यन्ते कामास्य हृदि संश्रिताः।
अथ मर्त्योऽमृतो भवति अत्र ब्रह्म समश्नुते॥

[ बृह० ४-४-६ ] इति, साङ्ख्या अपि ज्ञानेन चापवर्गो विपर्ययादिष्यते बन्धः ( सां० का० ४४ ) इत्यज्ञानेन बन्धं ज्ञानेन चापवर्गम्।

एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम्।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम्॥ ( सां० का० ६४ )

-- इति ज्ञानलक्षणं च जगुः। वेदान्तिनश्च "अतस्मिंस्तद्बुद्धिरूपः स्मृतिरूपः परत्र पूर्वदृष्टावभासः, यथा शुक्ताविदं रजतमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते"।

अनन्दा नाम ते लोका अन्धेन तमसाऽऽवृताः।
तांस्ते प्रेत्याभिगच्छन्ति अविद्वांसोऽबुधा जनाः॥

इत्यविद्ययैव संसारं तद्विवेकेन वस्तुस्वरूपावधारणं विद्यामाहुः। "विद्ययाऽमृतमश्नुते" इति विद्ययाऽपवर्गमात्मनोऽहं ब्रह्मास्मि नेहनानास्ति किञ्चन इत्यादिरूपमाहुः। चरके तु "आत्मेन्द्रियमनोर्थानां सन्निकर्षात्प्रवर्तते सुखदुःखम्" इति सुखदुःखोत्पत्तिमात्मेन्द्रियसहचरितस्य मनसोऽर्थेन सम्बन्धे सत्येव भवतीत्युक्तम्, अन्यत्र च "रजस्तमोभ्यां युक्तस्य संयोगोयमनन्तवान्" इति रजस्तमसोः कारणत्वमुक्तम्। "पुरुषोराशिसंज्ञस्तु मोहेच्छाद्वेषकर्मजः" इतीतरत्र मोहेच्छादीनां कारणत्वमुक्तमिति विभिन्नकारणप्रतिपादकानीव वचनानि दृष्ट्वा न व्यामोहमोहे निपतितव्यम्। गुणकर्तृत्वोक्तिस्तु गुणगुणिनोरभेदोपचारात् तत्रापि रजस्तमसी संसाररोगाद्यनिष्टफलाधायकत्वाद्गुणावपि दोषावित्युच्येते, मोहेच्छादयश्च तयोर्विकाराः "रजस्तमश्च मानसौ दोषौ तयोर्विकाराः कामक्रोधलोभमोहेर्ष्यामानमदशोकचिन्तोद्वेगभयहर्षादयः ( च० वि० ६-५ ) इति चरकोक्तेः "ताभ्यां निराकृताभ्यां तु सत्ववृद्ध्या निवर्तते" ( च० शा० १ )

मोक्षो रजस्तमोऽभावाद्बलवत्कर्मसंक्षयात् ।
वियोगः सर्वसंयोगैरपुनर्भव उच्यते ॥ इति ।

वैशेषिकैरपि 'तदभावे संयोगाऽभावोऽप्रादुर्भावश्च मोक्षः' ( वै० सू० ५-२-१८ ) इति रजस्तमोऽभावात्कर्मक्षयान्मोक्ष उक्तः । तौ च ज्ञान-साध्यौ तेन ज्ञानसाध्यता मोक्षस्य स्फुटीभवति, तथाहि—

एवं कारणवद्दुःखमस्वं चानित्यमेव च ।
न चात्मकृतकं तद्धि तत्र चोत्पद्यते स्वता ॥
यावन्नोत्पद्यते सत्यानैत दहं यथा ।
नैतन्ममेति विज्ञाय ज्ञः सर्वमिति वर्तते ॥ इति ।

योगस्य मोक्षोपायतां प्रकटयन्नाह—

योगे मोक्षे च सर्वासां वेदनानामवर्तनम् ।
मोक्षे निवृत्तिर्निःशेषा योगो मोक्षप्रवर्तकः ॥

—इति सैष योगः "अनारम्भादात्मस्थे मनसि स्थिरे । निवर्तते तदुभयं वशित्वं चोपजायते । सशरीरस्य योगज्ञास्तं योगमृषयो विदुः"। इत्युक्तः । वैशेषिकसूत्रेऽपि "तदनारम्भ आत्मस्थे मनसि स्थिरे शरीरस्य दुःखाभावः संयोगः [ वै० सू० ५-२-१६ ] इत्युक्तलक्षणो बोध्यः । यद्यप्यत्र 'शुद्धसत्वसमाधानात्'

आवेशश्चेतसो ज्ञानमर्थानां छन्दतः क्रियाः ।
दृष्टिः श्रोत्रं स्मृतिः कान्तिरिष्टतश्चाप्यदर्शनम् ॥
इत्यष्टविधमाख्यातं योगिनां बलमैश्वरम् ।

—इत्युक्ताष्टविधैश्वर्यप्राप्तिर्भवतीत्युक्तं तथापि तत्वस्मृतिमन्तरा न योगो नापि मोक्षस्तदुक्तं—

एतत्तदेकमयनं मुक्तेर्मोक्षस्य दर्शितम् ।
तत्वस्मृतिबलं येन गता न पुनरागताः ॥
अयनं पुनराख्यातमेतद्योगस्य योगिभिः ।
संख्यातधर्मैः सांख्यैश्च मुक्तैर्मोक्षस्य चायनम् ॥ इति ।

तत्वस्मृतिश्च "स्मृतिः सत्सेवनाद्यैश्च धृत्यन्तैरुपजायते" इत्युक्ता, तानि चाह—

सतामुपासनं सम्यगसतां परिवर्जनम् ।
व्रतचर्योपवासौ च नियमाश्च पृथग्विधाः ॥
धारणं धर्मशास्त्राणां विज्ञानं विजने रतिः ।
विषयेष्वरतिर्मोक्षे व्यवसायः परा धृतिः ॥ इति ।

तत्वस्मृतेश्च परिणाममाह—

कर्मणामसमारम्भः कृतानां च परिक्षयः ।
नैष्कर्म्यमनहङ्कारः संयोगे भयदर्शनम् ॥
मनोबुद्धिसमाधानमर्थतत्वपरीक्षणम् ।
तत्वस्मृतेरुपस्थानात्सर्वमेतत्प्रवर्तते ॥ इति ।

**मुक्तिस्वरूपम्—**

विपापं विरजः शान्तं परमक्षरमव्ययम् ।
अमृतं ब्रह्मनिर्वाणं पर्यायैः शान्तिरुच्यते ॥

—इति ब्रह्मपर्यायान्निरूप्य

तस्मिंश्चरमसंन्यासे समूलाः सर्ववेदनाः ।
ससंज्ञा ज्ञानविज्ञाना निवृत्तिं यान्त्यशेषतः ॥
अतः परं ब्रह्मभूतो भूतात्मा नोपलभ्यते ।
निःसृतः सर्वभावेभ्यश्चिह्नं यस्य न विद्यते ॥
ज्ञानं ब्रह्मविदाश्चात्र नाज्ञस्तज्ज्ञातुमर्हति ।

—इति मोक्षदशायां जीवात्मनो ब्रह्मभावः सर्वभावनिवृत्तिरूप उक्तः, सा चेयं विदेहमुक्तिः । जीवन्मुक्तदशायां च—

लोके विततमात्मानं लोकञ्चात्मनि पश्यति ।
परावरदृशः शान्तिर्ज्ञानमूला न नश्यति ॥
पश्यतः सर्वभावान्हि सर्वावस्थासु सर्वदा ।
ब्रह्मभूतस्य संयोगो न शुद्धस्योपपद्यते ॥

—इति सर्वभावान्सर्वावस्थासु पश्यतोपि ज्ञानमूला शान्तिर्न नश्यतीति सिद्धान्तितम्। उपनिषत्प्रतिपाद्योऽयमविकल्प आत्मैक्यप्रतिष्ठापनसिद्धान्तश्चरकस्यौपनिषदत्वं प्रतिपादयतीति सर्वमवदातम्।

दुःखकारणप्रस्तावे—

धीधृतिस्मृतिविभ्रंशः सम्प्राप्तिः कालकर्मणाम्।
असात्म्यार्थागमश्चेति ज्ञातव्या दुःखहेतवः॥

—इति कारणानि उक्तानि, तत्रापि कर्मैव प्रधानम्; न च धीधृतिस्मृतिविभ्रंशः, कालसम्प्राप्तिः असात्म्येन्द्रियार्थसंयोगश्च कारणं भवतीति वाच्यं तेषां कर्माधीनत्वात्, तदुक्तं जनपदोध्वंसनीये— "वाय्वादीनां यद्वैगुण्यमुत्पद्यते तस्य मूलमधर्मस्तन्मूलं वाऽसत्कर्म पूर्वकृतमिति" निर्दिष्टं दैवशब्देन कर्म यत्पौर्वदैहिकम्। हेतुस्तदपि" इति दैवशब्दवाच्यस्य फलोन्मुखस्य कर्मणः कारणत्वं स्वीकृतम्। "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इतीतरत्र प्रतिपादितः कर्मणो भोगादेव क्षयः। अत्रापि "नहि कर्म महत्किञ्चित्फलं यस्य न भुज्यते' इत्युक्तः, न च कृतं कर्म तत्कालं फलप्रदं भवति, क्रियमाणं चीयमानं फलोन्मुखं फलप्रदमित्यवस्थाक्रमानुविधायित्वात्कर्मणः। तेन नैकेन जन्मना फलोपभोगः, किञ्चित्कर्मेहैव फलप्रदं किञ्चिज्जन्मान्तर इति व्यवस्थेयम्। कृतहानाकृताभ्यागमप्रसक्तिनिवृत्तये पौर्वदैहिकं कर्मावश्यमभ्युपेयम्। अनेन देहेनानुपभोग्यफलाय कर्मणे देहान्तरं च स्वीकर्तव्यम्। तदेतत्सर्वं विमृश्योक्तं जीवप्रस्तावे "अहङ्कारः फलं कर्म देहान्तरगतिः स्मृतिः" इति देहान्तरगतिश्च कर्माधीना कर्म च पुरुषाधीनमिति प्रतिपादयताऽभ्यधायि

यथा स्वेनात्मनाऽऽत्मानं सर्वः सर्वासु योनिषु।
प्राणैस्तन्त्रयते प्राणी न ह्यन्योऽस्त्यस्य तन्त्रकः॥ इति।

न कोपि परमेश्वरादिरिहोररीक्रियते यः कर्मानुरूपं देहाद्देहान्तरगतौ जन्तुं तन्त्रयते किन्तु स स्वयं निर्विकारोऽप्यनादेः सत्व-संयोगात्क्षेत्र-

ज्ञतां प्राप्तः कर्मानुरूपामुच्चावचां योनिमभिप्रपद्यते सत्ववियोगाच्च विमुच्यते ।

## पुनर्जन्म—

यथा बृहदारण्यके 'ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय भिक्षाचर्यं चरन्ति' इत्येषणात्रयमुक्तं तथात्रापि प्राणैषणा वित्तैषणा परलोकैषणा इत्येषणात्रितयप्रतिपादनपरः परलोकैषणां प्रति विचिकित्सां निरस्यन् पुनर्भवं प्रतिष्ठापयिषुर्विस्तरेणाह—"संशयश्चात्र कथं भविष्याम इतश्च्युता न वेति । सन्त्येके प्रत्यक्षपराः परोक्षत्वात्पुनर्भवस्य नास्तिक्यमाश्रिताः, सन्ति चाऽऽगमप्रत्ययात्पुनर्भवमिच्छन्ति, इत्युपक्षिप्तं पूर्वपक्षं निराकरिष्यन्प्रत्यक्षपरिहारमाह—तत्र बुद्धिमान्नास्तिक्यबुद्धिं जह्याद्विचिकित्सां च,प्रत्यक्षं ह्यल्पमनल्पमप्रत्यक्षमस्ति यदागमानुमानयुक्तीरुपेक्षमाणाः प्रत्यवतिष्ठन्ते तान्प्रति विद्यमानवस्तूनामप्रत्यक्षहेतूनुदाहरति "सतां च रूपाणामतिसन्निकर्षादतिविप्रकर्षादावरणात्करणदौर्बल्यान्मनोऽनवस्थानात्समानाभिहारादभिभवादति सौक्ष्म्याच्च प्रत्यक्षानुपलब्धिरिति" एत एव शब्दाः सांख्यकारिकायां समानपरिपाट्या पठिता दृश्यन्ते तथाहि—"अतिदूरात्सामीप्यादिन्द्रियाघातान्मनोऽनवस्थानात् । सौक्ष्म्याद्व्यवधानादभिभवात्समानाभिहाराच्च" इति । पातञ्जलमहाभाष्ये चैतेषां सम्वाद इवावलोक्यते । "मातरं पितरं चैके मन्यन्ते जन्मकारणम्" इति जन्मकारणत्वेन मातृपितृवादिनां मतमुपन्यस्य

> आत्मा मातुः पितुर्वा यः सोऽपत्यं सञ्चरेद्यदि ।
> द्विविधं सञ्चरेन्मातुः पितुर्वा मरणं भवेत् ॥
> निरन्तरं नावयवः कश्चित्सूक्ष्मस्य चात्मनः ।

—इति खण्डितम् । ये तु षण्णां धातूनां स्वाभाविकं संयोगं वदन्ति तत्रापि कर्मकारणतां प्रकटयन्नाह—

> विद्यात्स्वाभाविकं षण्णां धातूनां यत्स्वलक्षणम् ।
> संयोगे च वियोगे च तेषां कर्मैव कारणम् ॥

अनादेश्चेतनाधातोर्नेष्यते परनिर्मितिः ।

—इत्यात्मनोऽनादित्वेनैव परनिर्माणपक्षो निरस्तः । प्रमाणैश्चतुर्भिः पुनर्भवं प्रतिष्ठापयितुं प्रवर्तमानः "धर्मद्वाराऽवहितैश्च व्यपगतरागद्वेषभयलोभमोहमानैर्ब्रह्मपरैराप्तैः कर्मविद्भिरनुपहतसत्वबुद्धिप्रचारैः पूर्वैः पूर्वतरैर्महर्षिभिर्दिव्यचक्षुभिर्दृष्टोपदिष्टः पुनर्भव इति आगमेन", मातापित्रोर्विसदृशान्यपत्यानि तुल्यसम्भवानां वर्णस्वराकृतिसत्वबुद्धिभाग्यविशेषाः, प्रवरावरकुलजन्म, दास्यैश्वर्यं, सुखासुखमायुः, आयुषो वैषम्यमिहाकृतस्यावाप्तिः अशिक्षितानां च रुदितस्तनपानहासत्रासादीनां प्रवृत्तिः, लक्षणोत्पत्तिः कर्मसादृश्ये फलविशेषः, मेधा क्वचित्क्वचिकर्मण्यमेधा, जातिस्मरणमिहागमनमितश्च्युतानां, समदर्शने प्रियाप्रियत्वमिति प्रत्यक्षेण, स्वकृतमपरिहार्यमविनाशिपौर्वदेहिकं दैवसंज्ञकमानुबन्धिकं कर्म तस्यैतत्फलमितश्चान्यद्भविष्यतीत्यनुमानेन, षड्धातुसमुदायाद्गर्भजन्म, कृतस्य कर्मणः फलं नाकृतस्य, नाङ्कुरोत्पत्तिरबीजात्, इति युक्त्या, एवं प्रमाणैश्चतुर्भिरुपदिश्य पुनर्भवं सदाचारपरायणैर्भाव्यमिति व्याजहार, मिलिन्दपह्नेनापि बीजात्फलं फलाच्च बीजमुदाहरणीकृतम् । कर्मकारणताप्रतिपादनपरेण वात्स्यायनेनाप्येतदनुरूपमेवोक्तम् , तथाहि दृष्टा च जन्मव्यावृत्तिः उच्चाभिजनो निकृष्टाभिजन इति, प्रशस्तं निन्दितमिति, व्याधिबहुलं सुखबहुलमिति, पुरुषातिशयलक्षणोपपन्नं विपरीतमिति, प्रशस्तलक्षणं निन्दितलक्षणमिति, पटूविन्द्रियं मृद्विन्द्रियमिति सूक्ष्मश्च भेदोऽपरिमेयः, सोयं जन्मभेदः प्रत्यात्मनियतात्कर्मभेदादुपपद्यते ।

आस्तिकदर्शनेषु जात्यायुर्भोगानां कर्मानुरूपोत्पत्तिस्वीकारेऽपि विहितनिषिद्धकर्मणि पुरुषस्वातन्त्र्यमङ्गीक्रियते । कर्म च द्विविधं चरकस्याभिमतं, पौर्वदेहिकमिहदेहिकं च, तत्र पौर्वदेहिकं कर्म दैवशब्दाभिलष्यम् , इहदेहिकं तु पुरुषकारशब्दोद्यम् ,

दैवमात्मकृतं विद्यात्कर्मयत्पौर्वदेहिकम् ।
स्मृतः पुरुषकारस्तु क्रियते यदिहापरम् ॥

इत्युक्तेः । तयोरपि बलाबलविशेषमुररीकृत्य फललाभवैषम्यञ्चोपपादितं महर्षिणा

बलाबलविशेषोऽस्ति तयोरपि च कर्मणोः ।
दैवं पुरुषकारेण दुर्बलं ह्युपहन्यते ॥
दैवेन चेतरत्कर्म विशिष्टेनोपहन्यते । इति,

न च केवलं कर्म न वा पुरुषकार उपाश्रयणीयः, किन्तु कर्मपुरुषकाररूप-चक्रद्वयालंकृतं रथमास्थाय प्रस्थेयमिति महर्षेः सिद्धान्तः, तथाहि—"तस्मादुभयदृष्टत्वादेकान्तग्रहणमसाधु" । इति ।

## संसारस्यानादित्वम्—

जात्यायुर्भोगाणां पूर्वकर्मजायमानत्वबाधप्रसक्तिनिवृत्तये शङ्कराचार्येण संसारोयमनादिरुक्तः, तथाहि—"अनादौ तु संसारे बीजाङ्कुरवद्धेतुहेतुमद्भावेन कर्मणः सर्गवैषम्यस्य च प्रवृत्तिर्न विरुध्यते" इति । चरकेणाप्युक्तम्

अनादिर्नास्त्यात्मनः क्षेत्रपारम्पर्यमनादिकम् ।
अतस्तयोरनादित्वात्किंपूर्वमिति नोच्यते ॥ इति ।

जातमात्रे शिशावनभ्यस्तहसितरुदितस्तन्यपानप्रवृत्तीरर्वाचीनवैज्ञानिक सहजवृत्त्या साधयन्ति, प्राचीनैरपि

यथा च फलवैचित्र्ये कर्मणां शक्तता पुनः ।
तथा विचित्रता लोके स्वभावादुपपत्स्यते ॥

—इति स्वभावोपि हेतुतया क्वचिन्निर्दिष्टः । नैयायिकास्तु स्वाभाविक न सहन्ते । तथाहि जयन्तभट्टः—"ननु कमलमुकुलविकासादिवत्स्वाभाविकमेव शिशोर्मुखविकासादि कार्यं स्यात्, स्वाभाविकं नाम किमुच्यते किमहेतुकमविज्ञातहेतुकमनियतहेतुकं वा, न तावदहेतुकं कार्यं संभवति कार्यत्वहानिप्रसङ्गात्, नाप्यविज्ञातहेतुकं तद्भावयितुं युक्तं कार्यमुपलभ्यत इति तद्धेतुपरिज्ञाने यततां भवान् किमुदास्ते ? न चासौ ज्ञातुमशक्यः कार्यस्यैव तत्र ज्ञापकत्वात् । नाप्यनियतहेतुकं कार्यं

किञ्चिदस्ति कार्योत्पादननियमेनैव हेतुनियमसिद्धेः, अतएव तत्कार्यमुपपादयितुकामास्तन्नियतमेव कारणमुपाददते लौकिकाः।

यत्राप्यनियतो हेतुर्वृश्चिके गोमयादिकः।
अभियुक्तास्तदत्रापि विशेषं न न मन्वते॥

तदेवं कारणनियमोऽपि कार्यविशेषदर्शनाद् रपह्नव इति मुखविकासस्य हर्ष एव कारणमवगम्यते, सहस्रकृत्वस्तथादर्शनात्, अचेतनानां तु तामरसादीनां विकासकारणं तरणिकिरणनिकरपरिष्वङ्गाद्युपलब्धमिति तदपि न स्वाभाविकम्,

तस्मान्मुखविकासस्य हर्षो हर्षस्य च स्मृतिः।
स्मृतेरनुभवो हेतुः स च जन्मान्तरे शिशोः॥ इति।

आयुर्वेदविद्भिश्च—

स्वभावमीश्वरं कालं यदृच्छां नियतिं तथा।
परिणामं च मन्यन्ते प्रकृतिं पृथुदर्शिनः॥

—इति तत्र तत्र स्वभावादिपदार्था अपि जगद्वैचित्र्यहेतुत्वेनोपन्यस्तास्तेषां सर्वपारिषदत्वात्।

## पदार्थज्ञानप्रयोजनम्—

आयुर्वेदशास्त्रे पदार्थविद्याप्रतिपादनं नातिप्रयोजनवदिवावभासते, तथापि "धातवः पुनः शारीराः समानगुणैः समानगुणभूयिष्ठैर्वाप्याहारविकारैरभ्यस्यमानैर्वृद्धिं प्राप्नुवन्ति, ह्रासं तु विपरीतगुणैर्विपरीतगुणभूयिष्ठैर्वाप्याहारैरभ्यस्यमानैः" इति समानगुणज्ञानमिवाऽसमानगुणज्ञानस्यापि चिकित्साकाले ह्यवश्यवेदनीयत्वात्, किं सामान्यं किं वैपरीत्यमित्यपेक्षायां

सर्वदा सर्वभावानां सामान्यं वृद्धिकारणम्।
ह्रासहेतुर्विशेषश्च ••• ••• ••• ॥
सामान्यमेकत्वकरं विशेषस्तु पृथक्त्वकृत्।

—इत्येवं सामान्यं विशेषश्च निरूपितौ, केषां सामान्यं केषां वा विशेष इत्याकांक्षाया निवृत्तये द्रव्यमुपक्षिप्तम्, तच्च चेतनमचेतनं च, चैतन्यश्चात्र गुण इत्यनाहूतोऽप्यायातो गुणः, गुणविशिष्टं हि द्रव्यं कार्मुकं भवत्किमपि निर्वर्तयति तच्च कर्म, इत्येवं चिकित्सोपकारायैव द्रव्यगुणकर्मसामान्यादयः पदार्था निरूपणीयाः, ते च वैशेषिकपरिगृहीतपद्धत्याऽत्र निरूपिताः। "खादीन्यात्मा मनः कालो दिशश्च द्रव्यसंग्रहः" अत्रादिपदेन "महाभूतानि खं वायुरग्निरापः क्षितिस्तथा" इति पृथिव्यादिपरिग्रहः, "शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च तद्गुणाः" इति एतेषां नैसर्गिकगुणानभिधाय सामान्यगुणास्तु

> तेषामेकगुणः पूर्वो गुणवृद्धिः परे परे ।
> पूर्वः पूर्वगुणश्चैव क्रमशो गुणिषु स्मृताः ॥

—इत्युक्ताः, इयं गुणवृद्धिर्भूतान्तरानुप्रवेशजनिता साङ्ख्यवेदान्तानुगामिनी, न्यायवैशेषिकनये तु वाय्वादिषु शब्दास्वीकारः, एषु पञ्चभूतेषु मध्य आकाशं विभु, आतिवाहिकशरीरे "भूतैश्चतुर्भिः सहितः सुसूक्ष्मैः" इति आकाशेतरभूतचतुष्टयगमनवचनात्, एतेषामसाधारणधर्माः "खरद्रवचलोष्णत्वं भूजलानिलतेजसाम्। आकाशस्याप्रतीघातः" इत्युक्ताः, ते च त्वगिन्द्रियग्राह्या इत्युक्तं, तथाहि—

> लक्षणं सर्वमेवैतत्स्पर्शनेन्द्रियगोचरम् ।
> स्पर्शनेन्द्रियविज्ञेयः स्पर्शो हि सविपर्ययः ॥ इति ।

कालविषये न बहूपलभ्यते, केवलं नाममात्रेण कीर्तनं दृश्यते, दिग्विषये तु सुतरां मौनमालम्बितं स्यादत्र साङ्ख्यनये कालदिशोस्तत्वान्तरास्वीकारो बीजम्।

शब्द, स्पर्श, रूप, रस, गन्ध, चिन्त्यादि, गुरु, लघु, शीत, उष्ण, स्निग्ध, रूक्ष, मन्द, तीक्ष्ण, स्थिर, सर, मृदु, कठिन, विशद, पिच्छिल, श्लक्ष्ण, खर, स्थूल, सूक्ष्म, सान्द्र, द्रव, बुद्धि, परत्व, अपरत्व, युक्ति,

संख्या, संयोग, विभाग, पृथक्त्व, परिमाण, संस्कार, अभ्यास, सत्व, रजः, तमः, धर्म, अधर्म, इच्छा, द्वेष, सुख, दुःख, प्रयत्ना इति सप्तचत्वारिंशद्गुणाः प्रोक्तास्तेषु केवलं पदार्थविज्ञानोपयुक्ता इह प्रपञ्चिता द्रव्यगुणविज्ञानीयास्तु आचार्यवर्यश्रीयादवशर्मविरचितद्रव्यगुणविज्ञानादवगन्तव्याः ।

शास्त्रदृढतादावुपायान्प्रदर्शयन्नग्निवेशोऽध्ययनमध्यापनं तद्विद्यसम्भाषां च परिजग्राह, तेषु तच्छास्त्राध्यायिना सह सम्भाषणं तद्विद्यसम्भाषाशब्देन परिगृहीतम्, एतदेव न्यायसूत्रकृता "तद्विद्यैश्च सहसंवादः" ( न्या० सू० ४-२-४० ) इति सम्वादशब्देनोक्तम् । द्विविधा तु खलु तद्विद्यसम्भाषा भवति, सन्धायसम्भाषा विगृह्यसम्भाषा च, तत्र सन्धायसम्भाषा नये संवाद इत्युच्यते, विगृह्यसम्भाषा तु जल्पवितण्डारूपा ज्ञेया, चरकेण तु विगृह्यसम्भाषा वादशब्देनोक्ता। छल-जाति-निग्रहस्थानानि गौतम इव विस्तरेण चरको न वर्णयाञ्चकार किन्तु केन सह सन्धाय सम्भाषा विधेया केन सह वा विगृह्य, कथं च तत्र सम्भाष्यमित्यादिविषयश्चरकेण विस्तरेण युक्तियुक्तश्च वर्णितः, न तथा न्यायसूत्रभाष्ययोरुपलभ्यते । न्यायभाष्यकारो दार्शनिकविषयमुदाहरति चरकस्तु "अग्निं जरणशक्त्या, बलं व्यायामशक्त्या, इत्येवमायुर्वेदीयविषयमुदाहरणीकरोति । इत्येवं भेदोपलम्भेपि न्यायशास्त्रीया कथापद्धतिश्चरकीयसम्भाषां बहुधाऽनुसरन्तीव दृश्यते, वादमार्गज्ञानार्थं वादो द्रव्यमित्येवं चतुश्चत्वारिंशत्पदान्युक्तानि, तत्र जल्पवितण्डे वादभेदत्वेनोक्ते, द्रव्यगुणादयस्तु पूर्वप्रपञ्चिता एव, प्रतिज्ञा च न्यायानुसारिणी, तां साधयितुं हेतुदृष्टान्तोपनयनिगमानि नैयायिकैरिवेहापि स्वीकृतानि किन्तु तत्र केवलं हेत्वाद्यवयववचतुष्टयी स्थापनाशब्देनोक्ता, नैयायिकानां प्रतिपक्ष एवात्र प्रतिष्ठापनाशब्देनोक्तः, जातिश्चोत्तरशब्देन परं नात्र चतुर्विंशतिभेदाः, सर्वतन्त्रादिभेदचतुष्टयोपेतश्च सिद्धान्तपदार्थः, शब्दः, प्रत्यक्षं, अनुमानं, ऐतिह्यं, औपम्यं, संशयः, प्रयोजनमेतानि न्यायोक्तान्येव, अनैकान्तिकहेत्वाभासः सव्यभिचार

शब्देन, परीक्षा जिज्ञासाशब्देन, निर्णयश्च व्यवसायशब्देन, अर्थापत्तिश्च अर्थप्राप्तिशब्देन, कारणं सम्भवप्रमाणं च सम्भवशब्देनोक्तम्, सदोषं वाक्यमनुयोज्यं विपरीतमननुयोज्यम्, प्रश्नः अनुयोगः, प्रतिप्रश्नः प्रत्यनुयोगः, न्यूनाधिकानर्थकापार्थकविरुद्धाख्याः पञ्च वाक्यदोषाः उक्ताः, तेष्वाद्याश्चत्वारो निग्रहस्थाने निर्दिष्टाः, विरुद्धश्च हेत्वाभासत्वेन, उक्तदोषपञ्चकरहितं वाक्यं वाक्यप्रशंसा, न्यायोक्तमुपचारच्छलं नात्र केवलं वाक्छलं सामान्यच्छलं चेति द्वयं दृश्यते, प्रकरणसमसंशयसमवर्ण्यसमास्त्रयो हेत्वाभासाः, ते च प्रकरणसमसव्यभिचारसाध्यसमस्थानीयाः, चरकीयोऽतीतकालो न्यायीयकालात्ययापदिष्टश्च भिन्नौ, हेत्वाभासोद्भावनं, उपालम्भः, तत्समाधानं, परिहारः, प्रतिज्ञाहानिः, अभ्यनुज्ञा, हेत्वन्तरं, अर्थान्तरं, एतानि निग्रहस्थानान्येव, तेषु मतानुज्ञा अभ्यनुज्ञाशब्देनोक्ता निग्रहस्थानञ्चोभयत्र समानम्।

इत्येवं नातिविस्तरेण चरकीय (आयुर्वेदीय) दर्शनपदार्थदर्शनं यथामति विहितं तद्गुणैकपक्षपातिनां सहृदयधुरीणानां वाचकानां मनःप्रमोदमाधास्यतीति बलवती म आशा, अत्र परममान्यायुर्वेदमार्तण्डयादवजी त्रीकमजी आचार्यमहोदयैः श्रीदुर्गाशङ्करकेवलरामशास्त्रिमहाभागैश्च महान्तं परिश्रममुरीकृत्य साक्षाल्लेखद्वारा च बहूपकृतं न तत्प्रत्युपकर्तुं पारयन्नात्मनः केवलमधमर्णतासूचकमञ्जलिं शिरसि करोमि, जयपुरीयश्रीलक्ष्मीरामट्रस्टव्यवस्थापकैरायुर्वेदमार्तण्डभिषगाचार्यराजवैद्यपण्डितनन्दकिशोरशर्मप्रभृतिभिर्विद्वद्वौरेयैर्मदीयोऽयं पदार्थविज्ञानग्रन्थः श्रीलक्ष्मीरामस्मारकग्रन्थमालायां स्वीकृत्य झटिति प्रकाशनभाग्यधायि येन दारिद्र्यमनोरथसारूप्यं नाभजत्, अतस्ते महाभागाः सधन्यवादमभिनन्द्यन्ते, प्रस्तावनालेखेन ग्रन्थमिममलङ्कुर्वाणाः पूज्यश्रीयादवजीचरणा अकारणपक्षपातिन्याऽसीमकरुणया मां मदीयं ग्रन्थं च गौरवभाजनं विदधाना वन्दनीयतमा

भवन्ति। प्रार्थये चान्ते गुणगृह्यान्विपश्चितोऽत्र मानुषस्वभावसुलभं भ्रमप्रमादादिदोषनिचयं प्रमार्ज्य कलानद्भिः सफलीकृतस्वविशेषणै-र्भाव्यमिति।

रसभवन
भुज-कच्छ
ता० १२-६-४८.

निवेदकः
विदुषां विधेयः
पण्डित बलवन्तशर्मा

# अथ शुद्धिपत्रकम्

| अशुद्धम् | शुद्धम् | पृष्ठः | पंक्तिः |
| --- | --- | --- | --- |
| कएड | कएठ | २ | १३ |
| स्पर्शाभवः | स्पर्शाभावः | ,, | २२ |
| गृह्णाणाति | गृह्णाति | ,, | ,, |
| गृह्ना | गृह्णा | ,, | ,, |
| प्रोक्त | प्रोक्तं | ३ | ११ |
| र्थामानु | र्थानु | ,, | १२ |
| भाट्ठा | भाट्टा | ४ | २२ |
| श्रात्मो | आत्तो | ५ | १२ |
| मुक्त | उक्त | ,, | १४ |
| द्वि | द्वै | ,, | २० |
| निश्चत | निश्चितं | ६ | १४ |
| वह्या | बाध्या | ७ | १२ |
| मुन | मनः | ,, | १८ |
| ससर्गता | संसर्गता | ९ | १ |
| बते | स | ,, | ८ |
| कष | कर्ष | ,, | १७ |
| सयोगा | संयोगा | १० | ६ |
| बुद्ध | बुद्धि | ११ | ६ |
| सामान्यं | सामान्य- | ११ | १२ |
| ह | ही | १६ | ५ |
| इम | इम | ,, | २१ |
| गता | गत | १८ | २ |
| सान्नक | सन्निकर्ष | ,, | ३ |
| सजवेत | समवेत | ,, | ५ |
| कारणात्त्व | कारणत्व | १६ | ११ |

| अशुद्धम् | शुद्धम् | पृष्ठः | पंक्तिः |
|---|---|---|---|
| जातीते | जानीते | १६ | १६ |
| भूमो | धूमो | ,, | २४ |

२१ तमे पृष्ठे १८ पंक्तेरनन्तरम्—

केवलव्यतिरेकि—यत्र व्यतिरेकेणैव व्याप्तिस्तत् । यथा जीवच्छरीरं सात्मकं प्राणादिमत्वात् । इत्यत्र यत्सात्मकं न भवति तत्प्राणादिमन्न भवति, यथा घटः, इति व्यतिरेकव्याप्तिरेवास्ति, न तु प्राणादिमत् तत्सात्मकम्, इत्यन्वयव्याप्तिरस्ति । जीवच्छरीरमात्रस्य पक्षीकरणेन दृष्टान्ताभावात् । पक्षातिरिक्तः हेतुसाध्ययोरेव सत्वात् ( त० कौ० )

| अशुद्धम् | शुद्धम् | पृष्ठः | पंक्तिः |
|---|---|---|---|
| रहितो | रहिता | २२ | २४ |
| द्विबिधं | द्विविधं | २५ | ७ |
| ज्ञात | ज्ञातं | २६ | ११ |
| हेतुत्वा | हेतुर्हेत्वा | २८ | २ |
| नामा हेतुः | नामाऽहेतुः | ,, | ८ |
| आश्र | आश्रया | २९ | ११ |
| पासद्धः | पासिद्धः | ,, | १४ |
| ध्यापक | व्यापक | ,, | २३ |
| जिस | किसी | ३० | १ |
| अनुमाने | अनु माने | ,, | २ |
| उससे | इसमें | ,, | ५ |
| धूएं | धूंए | ,, | २१ |
| सकते | सकते हैं | ३१ | २० |
| हुआ | हुई | ,, | २४ |
| सहचर्य | साहचर्यं | ३२ | १४ |
| व्यतिरेक | व्यतिरेकि | ,, | १५ |
| ''घटः | जैसे ''घटः | ,, | १८ |
| यत्व | यत्व हो | ,, | १९ |

| अशुद्धम् | शुद्धम् | पृष्ठः | पंक्तिः |
|---|---|---|---|
| हो | और प्रमेय ही | ३२ | २३ |
| नहीं हो | हो | ३३ | १२ |
| सकती | सकता | ,, | ,, |
| किन्तु | है | ,, | ,, |
| वह ही | वह | ,, | १३ |
| हो सकता है | है | ,, | ,, |
| परसंशय | पर-संशय | ३४ | २६ |
| इसलिए | अनुत्पन्न होने से | ३५ | २४ |

पृष्ठ ३५ पंक्ति २७ के आगे

इन पाँचों से सम्मिलित—पञ्चावयव वाक्य को परार्थानुमान कहा जाता है

| अशुद्धम् | शुद्धम् | पृष्ठः | पंक्तिः |
|---|---|---|---|
| उन्होंने | ० | ३६ | ६ |
| में, | के साथ | ३८ | ६ |
| में, | के साथ | ,, | ७ |
| दूसहा | दूसरा | ३८ | १० |
| सत्नात्कृत्यैव | साक्षात्कृत्यैव | ४० | २५ |
| बाक्य | वाक्यं | ४१ | ४ |
| अदृष्टार्थ | अदृष्टार्थः | ४१ | २२ |
| बोथः | बोधः | ४२ | ६ |
| कारण | करण | ४२ | ८ |
| दयम्र | दयमत्र | ४३ | १६ |
| व्यक्ते | व्यक्तौ | ४५ | ६ |
| रूढं | योगरूढं | ४६ | १४ |
| योग, | याग | ४६ | १२ |
| स्व्योपमु | स्व्योऽमु | ४७ | २ |
| त्पर्यं | त्पर्यं | ४७ | २० |
| रियुं | रिभुं | ४६ | ६ |

| अशुद्धम् | शुद्धम् | पृष्ठः | पंक्तिः |
|---|---|---|---|
| प्रयोजन | प्रयोजक | ५१ | २६ |
| वह ही | वही | ५४ | १ |
| सशये | संशये | ५६ | २३ |
| गद | गाद | ५७ | ३ |
| अत्र | अत्र उपमानम् | ५६ | १५ |
| हरत | हरति | ५६ | २३ |
| कर्मणा | कर्मणी | ६३ | १२ |
| होते हैं | हैं | ६३ | २० |
| परस्वा | पारत्वा | ६४ | १ |
| भेदा | भेदा | ६४ | २२ |
| पनीष | पनिष | ६६ | ६ |
| दस्य | दस्यैव | ६६ | ७ |
| स्वीकारस्वीकारः | स्वीकारः | ६६ | ८ |
| भौमं | भौमं तेजः | ६६ | २८ |
| पार्थिक | पार्थिव | ७२ | १८ |
| अनू | अनु | ७३ | १ |
| एद | एत | ८० | १५ |
| किस | किसी | ८१ | ११ |
| प्रवतते | वर्तते | ८३ | १२ |
| इत्यचक्षते | इत्याचक्षते | ८४ | १७ |
| स्पर्श | संस्पर्श | ८५ | १४ |
| प्रवृत्ति | प्रवृत्ति | ८६ | ८ |
| रहा हुआ | रहे हुए | ६४ | १२ |
| अध्याय | अध्यास | ६६ | ६ |
| समुदायात्म | समुदायात्मक | ६८ | ६ |

**पृष्ठ ६८ के अन्त में—**

| अशुद्धम् | शुद्धम् | पृष्ठः | पंक्तिः |
|---|---|---|---|

राशिपुरुषः

| सामान्यगुण | विशेष गुण |
|---|---|
| संख्या | बुद्धि |
| परिमाण | सुख |
| पृथक्त्व | दुःख |
| संयोग | इच्छा |
| विभाग | द्वेष |
| | प्रयत्न |
| | संस्कार ( भावना ) |
| | धर्म |
| | अधर्म |
| | मुक्तावस्था में दुःखा-दि गुण नहीं रहते । |

| अशुद्धम् | शुद्धम् | पृष्ठः | पंक्तिः |
|---|---|---|---|
| वैवृत्वा | दैवृत्या | ९९ | १८ |
| चक्रदर्श | चक्रदर्शन | १०१ | १७ |
| विषये | विषयों | १०३ | १६ |
| चार्यै | चार्य | १११ | ६ |
| द्रव्यस्य | द्रव्यगुरुत्वस्य | ११३ | १५ |
| स्यन्दस्य | स्यन्दनस्य | ११४ | २ |
| शुद्धि | शुद्धिः | ११४ | १५ |
| वह्नि | वह्निं | ११४ | १७ |
| भिज्ञा | भिज्ञां | ११५ | २४ |
| प्रकार | दो प्रकार | ११६ | ४ |
| विशेषम् | विशेषणम् | ११८ | ४ |
| चरध्वंसां | चिरध्वस्तं | १२० | १३ |

| अशुद्धम् | शुद्धम् | पृष्ठः | पंक्तिः |
|---|---|---|---|
| यज्जती | यज्जाती | १२१ | २ |
| काते | करते | १३४ | ५ |
| उपेक्षा | अपेक्षा | ,, | ११ |
| अपेक्षेते | अपेक्षते | ,, | २१ |
| रूपस्थ | रूपस्य | १३४ | २२ |
| तद | तत | १३८ | १ |
| अथ भाव | अथाभाव | १४३ | १ |
| कुलालोपि | कुलालापितापि | १४६ | ७ |
| करणनियमा | करणवृत्तिनियमा | ,, | २३ |
| परा | पटा | ,, | २३ |
| कालरूप | कपालरूप | ,, | २५ |
| करते | कहने | १४८ | १ |
| योने | योनि | ,, | २२ |
| वै | वैं | १५० | १३ |
| च | चा | १५१ | २४ |
| रेतसो | रेतसो: | ,, | २६ |
| ति | ति: | १५२ | ७ |
| सर्व | सर्ग | १५३ | १६ |
| दाच | दाश्च | १५४ | २७ |
| और परिणाम | परिणाम ( अदृष्ट ) | १५५ | ५ |
| में | से | १५८ | ५ |
| वितरण | विहरण | ,, | २० |
| प्राह | प्राहक | ,, | २४ |
| गुणवाली | गुणरूप | १५६ | २६ |
| विचारण | विचारणा | १६० | १७ |
| सात्वकादि | सात्विकादि | ,, | २६ |

| अशुद्धम् | शुद्धम् | पृष्ठः | पंक्तिः |
|---|---|---|---|
| द्रव्य | द्रव | १६१ | ६ |
| सांख्यप्रक्रिया | तद्विद्यसंभाषा | १६७ | ८ |
| निगम | निगमन | १६६ | १५ |
| क्रो | को | १७२ | ३ |

पृष्ठ १७४, पंक्ति २१, में इति तद्विद्यसंभाषा-निरूपणम् पढना ।

# विषयानुक्रमणी:

( अथ प्रथमः खण्डः )

विषयः पृष्ठम्

# आयुर्वेदीयपदार्थविमर्शशोधनम्

| अशुद्धम् | शुद्धम् | पृष्ठः | पंक्तिः |
|---|---|---|---|
| निनिषु | निनीषु | १ | ४ |
| बद्ध | बद्धं | १ | १२ |
| ध्यापक | ध्यापकैः | ३ | १८ |
| निमित्रये | निर्मितये | ३ | २२ |
| विहिता | विहितो | ३ | २६ |
| विधी | निधी | ,, | २७ |
| अस्मि | अस्मिं | ४ | ३ |
| दय | दयः | ,, | १६ |
| क्रियते | क्रियेत | ५ | २१ |
| न ती | नीति | ६ | २ |
| रि ति | रति | ७ | १७ |
| द | दा | ८ | १ |
| केन | के न | ,, | १४ |
| लभते | लभंते | ६ | ६ |
| प्रकृति | प्रकृतिं | ,, | २२ |
| स्पृक् शरीरे | स्पकृशरीरे | १२ | २ |
| त्री | त्रयी | ,, | १० |
| प्राणयति | प्राणयते | १५ | २२ |
| स्तयः | स्तमः | १६ | १७ |
| द्रुने | द्रुते | ,, | २५ |
| त्व | त्वं | १८ | ११ |
| गमयति | गमयन्ति | १६ | १ |
| नमे | वमे | ,, | १३ |
| सार | सर | २० | १३ |

| अशुद्धम् | शुद्धम् | पृष्ठं | पंक्तिः |
|---|---|---|---|
| दर्भा | दृब्धा | २१ | ८ |
| पञ्चस्य | पञ्चय्य | ,, | १७ |
| दीति | दीनि | ,, | २७ |
| मन | मनः | २८ | २ |
| कारणा | करणा | ,, | १६ |
| च | व | ,, | २४ |
| न भिद्य | भिद्यते | २३ | २१ |
| दुन्ति | दान्ति | २४ | ८ |
| वरु | मवरु | ,, | १४ |
| त्मनः | त्ममनः | २५ | १३ |
| लोक्य | लोक्यं | २६ | ४ |
| ल्पतो | ल्पता | २७ | ६ |
| लप | लूप | ,, | २४ |
| स्पर्श | स्पर्शो | २८ | ५ |
| सत्ता | बुद्धिः सत्ता | ३२ | ८ |
| याद्याता | य द्याता | ३५ | ११ |
| लष्य | लप्य | ३६ | २५ |
| मत्यौ | यत्यौ | ,, | २६ |
| अतादि | आदि | ३७ | १४ |
| वैज्ञानिक | वैज्ञानिकाः | ,, | १६ |
| कथ | कथं | ४० | १४ |
| त्वारि | त्वारिं | ,, | २० |
| भावो | भासो | ४१ | १० |

श्रीस्वामि-लक्ष्मीरामनिधि ( ट्रस्ट ) संस्थापकाः

जयपुरराज्यनिवासिनः स्वर्गता आयुर्वेदमार्तण्डाः चिकित्सकचूडामणयः लक्ष्मीरामस्वामिमहोदयाः ।

अथ

# आयुर्वेदीयपदार्थविज्ञानम्

## ॥ प्रथमः प्रमाणखण्डः ॥

पदमर्थं च सम्बन्धं निर्वर्त्तयत्यनीश्वरः ॥
नत्वेश्वरं तं प्रयते पदार्थप्रतिपत्तये ॥ १ ॥

तत्र तावत्प्रथमं पदार्थनिर्वचनम्—

पदार्थस्तु पदस्यार्थोऽभिधेयत्वादिरुच्यते ।
सदसत्त्वाद् द्विधा भिन्नः सप्तधा परिकीर्तितः ॥ १ ॥

**भाषा—**

पदका अभिधेय अर्थ पदार्थ कहा जाता है। वह सत् और असत् ऐसे दो प्रकार का है। इसके अवान्तर भेद सात हैं। अर्थात् आयुर्वेद शास्त्र में सात पदार्थ माने जाते हैं।

---

**टिप्पणी—**

स्वनिर्मितपदार्थैकविज्ञानकारिकावलिम् ॥
संक्षिप्तां बालबोधाय व्याकुर्वे प्राक्तनोक्तिभिः ॥ १ ॥

आयुर्वेदीयपदार्थविज्ञानं विवक्षुर्ग्रन्थकृत्तत्रतावद्विज्ञेयाधीनत्वाद्विज्ञानस्य प्रथमं पदार्थलक्षणमाह—पदार्थ इति। 'पदस्यार्थः पदार्थ' इति व्युत्पत्त्या पदाभिधेयो व्यक्तिविशेषो गृह्यते। यथा—कम्बुग्रीवादिमान्पृथुबुध्नोदराकृतियुतो व्यक्तिविशेषो घटपदाभिधेयो घटपदार्थः। आदिपदेनेह अस्तित्वज्ञेयत्वग्रहणं, सर्वस्यापि पदार्थस्यास्तिताभिधाज्ञानविषयतावत्त्वात्। एतच्च साधर्म्येण 'षण्णामपि पदार्थानामस्तित्वाभिधेयत्वज्ञेयत्वानि' इति प्रशस्तपादेनाप्युक्तम्। स च भावाभावरूपाभ्यां द्विधा 'द्विविधमेव सर्वं सच्चासच्च' च० सू० ११–१७

इति चरकोक्तेः। अत्र सदिति विधिविषयप्रमाणगम्यं भावरूपम्, असदिति निषेधविषयप्रमाणगम्यमभावरूपमिति चक्रः। एवं द्विविधोऽपि सकलः पदार्थः द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायाभावाख्यैर्वक्ष्यमाणभेदैः सप्तधा भिन्न इति शेषः, पदार्थविभाजनविधाविहाष्टम्या विधाया अनङ्गीकारात्।

अथ पदार्थः—

**द्रव्यं गुणास्तथा कर्म सामान्यं सविशेषकम्।**
**समवायस्तथाऽभावस्तेषां सिद्धिः परीक्षया॥ २॥**

भाषा—

द्रव्य, गुण, कर्म, सामान्य, विशेष, समवाय और अभाव ये सात पदार्थ हैं। इनकी सिद्धि परीक्षा-प्रमाण-से होती है।

---

टिप्पणी—

सामान्यं च विशेषं च गुणान्द्रव्याणि कर्म च। समवायं च तज्ज्ञात्वेति (सू० १-२६) चरके षट् पदार्थाः कणादवेणोक्ताः, एत एव वैशेषिकसूत्र-भाष्ययोः "धर्मविशेषप्रसूताद्द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्" (वै० सू० १-१-४) 'द्रव्यगुणकर्मसामान्यविशेषसमवायानां षण्णां पदार्थानां साधर्म्यवैधर्म्य-तत्त्वज्ञानं निःश्रेयसहेतुः' (प्र० पा० भा०) इत्युक्ताः। ननूक्तचरकवचने षट् पदार्थोक्तेरायुर्वेदशास्त्रेऽभावाभाव इति चेन्न, अभावस्य पृथगनुपदेशो भावपारतन्त्र्यान्नत्वभावादिति कन्दलीकृदुक्तेः, नवमाह्निके च चतुर्विधाभाव-प्रपञ्चनाच्च पदार्थप्रतिज्ञायामसूत्रितस्याप्यभावस्य वैशेषिकैरङ्गीकारः, "स्पर्शनेन्द्रियविज्ञेयः स्पर्शो हि सविपर्ययः" (च० शा० १-३०) सविपर्ययः स्पर्शाभावः, यदिन्द्रियं यद्गृह्णाति तत्तस्याभावमपि गृह्णातीति (चक्र) चरक-चक्रपाणिभ्यामभावस्यापीन्द्रियगोचरतावचनात्, अभावस्य सप्तमपदार्थत्वेन

---

अस्तित्वम् Existence
अभिधेयत्वम् Namability
ज्ञेयत्वम् knowability

स्वीकारो न्याय्यः। न च पदार्थसामान्यलक्षणेऽस्तितायाः परिग्रहात्तस्याश्चाभावेऽभावान्न लक्षणसङ्गतिः इति वाच्यं, यस्य वस्तुनो यत्स्वरूपं तदेव तस्यास्तित्वमिति कन्दलीकृदुक्तेः, अभावस्यापि स्वरूपवत्तोपपत्तेः। एतेषामुक्तसप्तपदार्थानां सिद्धिर्वक्ष्यमाणस्वरूपया परीक्षया भवतीति शेषः "प्रमेयसिद्धिः प्रमाणाद्धि" इति वचनात्। दर्शनभेदेन मतभेदेन च पदार्थसंख्या भिद्यते, तद्यथा—वैशेषिकैः सप्त नैयायिकैः षोडश, सांख्यैः पातञ्जलैश्च पञ्चविंशतिः भाट्टैश्चत्वारः, प्राभाकरैरष्टौ, मायावादिवेदान्तिभिर्माध्वैश्च द्वौ, रामानुजीयैस्त्रयः, आयुर्वेदीयैश्चेहोपदिष्टाः सप्त पदार्थाः स्वीक्रियन्ते।

प्रमाणपदार्थः—

**परीक्षा च प्रमाणं च ज्ञेये ह्येकार्थवाचके।**
**प्रमायाः करणं प्रोक्तं प्रमाणं तत्त्वदर्शिभिः॥ ३॥**
**करणं साधकतमं, यथार्थमनुभवः प्रमा।**
**द्विधा त्रिधा चतुर्धा वा परीक्षेहाङ्गीकृता॥ ४॥**

भाषा—

परीक्षा तथा प्रमाण ये दोनों शब्द एक अर्थ के बोधक हैं अर्थात् पर्यायरूप हैं। तत्वज्ञपुरुषों ने प्रमा के करण को प्रमाण कहा है। साधकतम कारण को करण कहते हैं और यथार्थ अनुभव को प्रमा। इस शास्त्र में परीक्षा अर्थात् प्रमाण दो, तीन, या चार माने जाते हैं।

टिप्पणी—

अनुभवो द्विधा—यथार्थोऽयथार्थश्च। तत्र तद्वद्विशेष्यकतावति वस्तुनि तद्वत्प्रकारतानुभवो यथार्थः। यथा—स्थाणुत्वरूपविशेष्यतावति स्थाणौ अयं

| | | | |
|---|---|---|---|
| द्रव्यम् | Substance | विशेषः | Particularity |
| गुणः | Quality | समवायः | Inherence |
| कर्म | Action | अभावः | Non-existence |
| सामान्यम् | Generality | | |

स्थाणुः इत्याकारकः स्थाणुत्वप्रकारतानुभवो यथार्थः । तदभाववद्विशेष्यतावति तद्वत्प्रकारतानुभवोऽयथार्थः । यथा—इहैव पुरुषत्वाभाववति स्थाणौ अयं पुरुषः इत्याकारकः पुरुषप्रकारतानुभवोऽयथार्थः, सोऽयं यथार्थानुभव एव प्रमा, तद्वति तत्प्रकारकज्ञानत्वं प्रमात्वमित्युक्तेः ! प्रमायाः करणं प्रमाणम् । असाधारण कारणं करणम् । कार्यमात्रं प्रति *साधारणासाधारणकारणे भवतः, तयोरसाधारणं कारणं करणमित्युच्यते । कारणस्यासाधारणता च साधकतमता, 'साधकतमं करणम्' इति पाणिनिवचनात् । यद्व्यापाराव्यवधानेन क्रियानिष्पत्तिस्तत्साधकतमं कारणं ज्ञेयम् । यथा—रामेण बाणेन हतो बाली, अत्र रामनिष्ठबाणसन्धानरूपव्यापारे सत्यपि बाणनिष्ठव्यापारमन्तरा न बालिहननम्, तस्माद्बाणनिष्ठव्यापारो व्यवधानम् । किन्तु बाणनिष्ठव्यापाराव्यवधानेन बालिप्राणवियोगरूपक्रियानिष्पत्तेस्तस्य करणसंज्ञा । तदुक्तं हरिणा "क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् । विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्" । करणं पुनस्तद्यदुपकरणाय उपकल्पते कर्तुः कार्याभिनिर्वृत्तौ प्रयतमानस्य [ च० वि० ८-७० ] यत्तु कर्त्रधीनव्यापारे साधकतमं तत्करणम् [ चक्र ] करणं पुनर्भेषजम् । वात्स्यायनोऽपि प्रमाणलक्षणमित्थमाह—प्रमाता येनार्थं प्रमिणोति तत् ( प्रमाणम् ) । प्रमाता नाम यस्येप्साजिज्ञासाप्रयुक्तस्य प्रवृत्तिः सः तत्र कारणं नाम तद्यत् करोति स एव हेतुः कर्ता (च० वि० ८-७०) इह कार्यप्राप्तौ कारणं भिषक् । परीक्ष्यते व्यवस्थाप्यते वस्तुस्वरूपमनयेति परीक्षाप्रमाणानि" ( चक्र० ) इति व्युत्पत्त्या परीक्षा च प्रमाणं चास्मिन् शास्त्रे पर्यायत्वेन व्यवह्रियेते इति बोध्यम् । प्रत्यक्षमेकं चार्वाकाः, अनुमानञ्च कणादसुगतौ, शब्दोऽपीति सांख्याः, उपमानमपीति नैयायिकाः, अर्थापत्तिरपीति प्राभाकराः, अनुपलब्धिरपीति भाट्टा वेदान्तिनश्च, संभवैतिह्ये अपीति पौराणिकाः, चेष्टापीति तान्त्रिकाः, एवं प्रस्थानभेदेन प्रमाणसंख्याभेदः ।

---

*कार्यमात्रं प्रति यत्कारणं तत्साधारणं यथा दिक्कालादृष्टादि, ईश्वरः, तज्ज्ञानेच्छाकृतयः, प्रागभावः, कालः, दिक् अदृष्टमित्यष्टौ प्रतिबन्धकाभावेन सह नव वा साधारणकारणानीति नैयायिकसमयः ।

प्रमाणम्—

**आप्तोपदेशः प्रत्यक्षमनुमानमिति त्रिधा।**
**आप्तोपदेशरहितं तदेव द्विविधं पुनः ॥ ५ ॥**
**युक्तियुक्तं तु विज्ञेयं प्रमाणानां चतुष्टयम् ॥**

भाषा:—प्रत्यक्ष और अनुमान ये दो, अथवा आप्तोपदेश, प्रत्यक्ष और अनुमान ये तीन अथवा ऊपरके तीन और युक्ति कुल मिला कर चार प्रमाण हैं।

---

टिप्पणी:—

"द्विविधा तु खलु परीक्षा ज्ञानवतां प्रत्यक्षमनुमानञ्च" (च० वि० ८-८३) इति प्रत्यक्षमनुमानरूपं च प्रमाणद्वयमुक्तम्। "त्रिविधा वा सहोपदेशेन" (च० वि० ४-५) इत्याप्तोपदेशेन सह प्रमाणत्रयमुक्तम्। "तस्य चतुर्विधा परीक्षा आप्तोपदेशः प्रत्यक्षमनुमानं युक्तिश्चेति" (च० सू० ११-१७) युक्ति-सहितं प्रमाणचतुष्टयमुक्तम्। न चैभिर्वचनैर्द्वैविध्यं त्रैविध्यं चातुर्विध्यं च परस्परविरुद्धं परीक्षायामुक्तमिति वाच्यम्। द्वैविध्ये हि ज्ञानवतामधिकारः ज्ञानं च ज्ञायतेऽनेनेति व्युत्पत्त्याऽऽप्तोपदेश एव, "आप्तोपदेशरूपशास्त्रजनितज्ञान-वताम्" इति चक्रोक्तेः, "पूर्वमाप्तोपदेशाज्ज्ञानं ततः प्रत्यक्षानुमानाभ्यां परीक्षो-पपद्यते, किं ह्यनुपदिष्टं पूर्वं यत्तत्प्रत्यक्षानुमानाभ्यां परीक्षमाणो विद्यात्" इति चरकोक्तेश्च। अनुपदिष्टवह्नेः प्रत्यक्षेऽपि वह्नौ न वह्निरूपं प्रत्यक्षं ज्ञानं भवति, तथैवानुपदिष्टवह्निधूमस्य धूमदर्शनादपि वह्न्यनुमानं न भवति तस्मात्पूर्वमपेक्षितेन ज्ञानेन द्विविध्येऽपि त्रैविध्यमनायाससिद्धमिति न विरोधः, यच्च युक्तिसहितत्वेन प्रमाणचातुर्विध्यं तदपि प्रौढवादमात्रम्. ऊहलक्षणायाः परमार्थतोऽप्रमाण-भूतायाः प्रमाणसाहाय्येन व्याप्रियमाणाया युक्तेः प्रायो लोकानां व्यव-हारादिह प्रमाणत्वेनोक्तिः, वस्तुतस्तूहापरपर्यायस्तर्क एव सा, स्वयं महर्षिणाऽपि "अनुमानं नाम तर्को युक्त्यपेक्षः" इति तस्या अङ्गत्वेन स्वीकारात्। तत्रानुमानाद्भेदो दुष्कर इति नाद्रियामहे इति चक्रोक्तेश्च।

दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात्त्रिविधं प्रमाणमिष्टम् ( सां० का० ) तत्साधकतमं यत्तत्त्रिविधं प्रमाणम् ( सां० सू० १-८७ ) प्रत्यक्षाऽनुमानाऽऽगमाः प्रमाणानि ( यो० सू० १-७ ) इति सांख्यैः पातञ्जलैश्च स्वीकृतं प्रमाणत्रयमेवेति सिद्धम् ।

प्रत्यक्षम्—

**ज्ञानं यदिन्द्रियार्थानां सन्निकर्षात्प्रवर्तते ॥ ६ ॥**
**प्रत्यक्षं षड्विधं तत्तु श्रोत्रजादिप्रभेदतः ॥**

भाषा—

ज्ञानेन्द्रिय और विषयके सन्निकर्ष से जो ज्ञान होता है उसे प्रत्यक्ष कहा जाता है। उस ज्ञान के श्रावण, त्वाच, चाक्षुष, रासन, घ्राणज, तथा मानस ऐसे छः भेद हैं।

---

टिप्पणी—

अक्षमक्षं प्रतीत्योत्पद्यत इति प्रत्यक्षमिति व्युत्पत्त्या ज्ञानेन्द्रियेण पदार्थस्य यत्साक्षान्निश्चितज्ञानं भवति तत्प्रत्यक्षमित्यभिधीयते । एतदेव "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्" इति गौतमेनाप्युक्तम् । अत्राव्यपदेश्यं शब्दाजन्यम्, अव्यभिचारि भ्रमसंशयरहितं च ज्ञेयम् । प्रत्यक्षफलरूपा बुद्धिरिह प्रत्यक्षशब्देनाभिधीयते, तथैव लोकव्यवहारात्, परमार्थतस्तु यतो भवतीन्द्रियादेरीदृशी बुद्धिस्तत्प्रत्यक्षम् ( चक्र० ) इति बोध्यम् । इन्द्रियाणि च घ्राणरसनचक्षुस्त्वक्श्रोत्रमनांसि षट् प्रशस्तोक्तान्येव । न च चरक इन्द्रियोपक्रमणीयेऽन्यत्र बहुत्र च मनोरहितानां पञ्चानामिन्द्रियतोक्तेः "घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः" ( १-१-१२ ) इति न्यायसूत्रेऽपि तथा दर्शनात्पञ्चैवेन्द्रियाणीति वाच्यं, भौतिकानां बाह्येन्द्रियाणां परिगणनपरैवेयमुक्तिर्न सर्वेन्द्रियावरोधिनी, न्यायसूत्रे "भूतेभ्य" इति स्पष्टवचनात् । "भौतिकानि चेन्द्रियाण्यायुर्वेदे वर्ण्यन्ते" इति सुश्रुतोक्तेश्च । मनस्त्वाहङ्कारिकमेव जायते बुद्धिरव्यक्ताद्बुध्याऽहमिति मन्यते ( च० शा० १ ) इत्यत्र

---

प्रत्यक्षागमानुमानोपमानैः (सु० सू० १-१६) इति सुश्रुते प्रमाणचतुष्टयनिर्देशः।

मननरूपमनोधर्मस्याहङ्कारानन्तरमुल्लेखात्, तत एव च मनसः खादीनामुत्पत्तिकल्पना माभूदिति हेतोः परं खादीन्यहङ्कारादित्येवं पुनरहङ्कारशब्दोपादानेन मनोव्यावृत्तेः सूचितत्वाच्च। "नचाप्यहङ्कारविकारदोषैः" ( च० शा० ९-३७ ) इत्यत्राहङ्कृतिविकृतित्वेन मनसो बोधात्, "आहङ्कारिकमेव तत्" इति चरकप्रदीपिकोक्तेश्च। पञ्चभूतविज्ञानकर्त्रापि मनआदीनामभौतिकानां तु तिस्रोऽन्याः प्रकृतयः, इति मनसोऽभौतिकत्वं स्वीकृतम्। वाय्वादीनामुत्पत्तेः पूर्वं क्षेत्रज्ञस्य सत्वकरणतासत्वोपादनता च मनसोऽभौतिकत्व एव सुसंगच्छेयातां तस्मात् न मनो भौतिकमिति राद्धान्तः। ननु मनस इन्द्रियत्वेनैव भौतिकत्वं सिद्धं तच्च किमिति वार्यते, उच्यते "तथेन्द्रियार्थाः" इति वाक्यशेषात्, नच सुखादीनां भौतिकत्वापादनं सुशकमिति। इत्यमिन्द्रियाणां मनसश्चोपादानभेदात्, "आत्मप्रत्यक्षाः सुखदुःखेच्छाद्वेषादयः, शब्दादयस्त्विन्द्रियप्रत्यक्षाः" ( च० वि० ८-३९ ) इति चरकोक्तेस्तेषां विषयभेदात्, बाह्याभ्यन्तरत्वभेदाच्च पृथगुक्तिः। मनस इन्द्रियत्वं तु आत्रेयभद्रकाप्यीये मधुररसप्रस्तावे "षडिन्द्रियप्रसादनः" इति वचनेन स्वीकृतमेव। तच्च न केवलं ज्ञानेन्द्रियं, नवा कर्मेन्द्रियं, किन्तु एकादशस्विन्द्रियेषु मध्ये मन उभयात्मकं-बुद्धीन्द्रियं कर्मेन्द्रियं च, चक्षुरादीनां वागादीनां च मनोऽधिष्ठितानामेव विषयप्रवृत्तेः ( वाच० ) "मनः पुरःसराणीन्द्रियाणि अर्थग्रहणसमर्थानि भवन्ति" ( च० सू० ६-७ ) "उभयात्मकं मन." ( सुश्रु० ) ( सा० सू० २-२६ ) इति वचनात्। उभयविधेन्द्रियानुग्राहकत्वादुभयात्मकम्। एतस्य प्रत्यक्षज्ञानस्य प्रक्रिया वात्स्यायनेनैवमुक्ता "आत्मा मनसा संयुज्यते मन इन्द्रियेण इन्द्रियमर्थेन, ततः प्रत्यक्षज्ञानमुत्पद्यते" इति। यथा-घटप्रत्यक्षे जननीये घटेन नेत्रस्य, नेत्रेण मनसो, मनसाऽऽत्मनश्च संयोगोपेक्ष्यते, तादृशसंयोगसत्व एव घटविषयकं प्रत्यक्षज्ञानं जायते नान्यथा। अत्र यदि प्रत्यक्षज्ञानविषयो घट एव न स्यात्, नेत्ररूपमिन्द्रियं न स्यात्, तच्च विकलं वा स्यात्, सत्यप्यविकले च तस्मिन्मनसि विषयान्तरव्यापृते प्रत्यक्षज्ञानं न भवेत्। ज्ञानाधिकरणत्वेनात्राऽऽत्मनस्तूपस्थितरनायाससिद्धैव, यदुक्तं "यत्तु (आत्ममनःसंयोगादिकं) समानमनुमानादेर्ज्ञानस्य न तन्निवर्तते" ( वात्स्या० ) "आत्ममनसोस्तु सदपि ज्ञानजनकत्वमिह न

सूत्रितं सर्वप्रमाणसाधारणत्वात्" (न्या० मं०) इति। एतच्च चरकोऽप्याह- "आत्मेन्द्रियमनोर्थानां सन्निकर्षात्प्रवर्तते। व्यक्ता तदात्वे या बुद्धिः प्रत्यक्षं सा निरुच्यते" (सू० १-२०) इति। -शब्द-स्पर्श-रूप-रस-गन्धाश्चिन्त्यादिश्च श्रोत्रत्वक्चक्षूरसनघ्राणानां मनःषष्ठानामिन्द्रियाणां विषयाः "पञ्चेन्द्रियार्थाः शब्दस्पर्शरूपरसगन्धाः" (च० सू० ८।११) "मनसश्चिन्त्यमर्थः" (च०सू८-१६) इति चरकेणोक्ताः। विषयेन्द्रियभेदेन षड्विधे प्रत्यक्षे श्रोत्रोत्पन्नं शब्दादिप्रत्यक्षं श्रावणं, त्वचोत्पन्नं स्पर्शादिप्रत्यक्षं त्वाचं, चक्षुषोत्पन्नं रूपादिप्रत्यक्षं चाक्षुषं, रसनेनोत्पन्नं रसादिप्रत्यक्षं रासनं, घ्राणेनोत्पन्नं गन्धादिप्रत्यक्षं घ्राणजं, मनसोत्पन्नं सुखदुःखादिप्रत्यक्षं मानसमिति व्यपदिश्यते। तदुक्तं "या यदिन्द्रियमाश्रित्य जन्तोः बुद्धिः प्रवर्तते। याति सा तेन निर्देशं मनसा च मनोभवा" (च० शा० १-३२) इति।

**तत्र श्रोत्रादिजं बाह्यमान्तरं मानसं पुनः ॥ ७ ॥**
**तदेव निर्विकल्पादिभेदेन द्विविधं मतम् ॥**
**निष्प्रकारं निर्विकल्पं सविकल्पमतोऽन्यथा ॥ ८ ॥**

भाषा—

श्रोत्र आदि द्वारा उत्पन्न ज्ञान बाह्यप्रत्यक्ष, तथा मन द्वारा उत्पन्न ज्ञान आन्तरप्रत्यक्ष कहा जाता है, यह ज्ञान निर्विकल्प तथा सविकल्प के भेद से दो प्रकार का माना जाता है, नाम-जाति-गुण-क्रिया शून्य निर्विकल्प, तथा उनसे युक्त सविकल्प है।

---

टिप्पणी—

बाह्याभ्यन्तरभेदेन प्रत्यक्षं द्विविधं, करणानां बाह्याभ्यन्तरत्वभेदात्, तथा हि इन्द्रियं द्वारीकृत्य जायमानं शब्दस्पर्शादिरूपं बाह्यं, मनो द्वारीकृत्य जायमानं सुखदुःखादिरूपमान्तरम्। तत्प्रत्यक्षं निर्विकल्प-सविकल्पत्वाभ्यां द्विधा, तत्र निर्गतो विकल्पः प्रकारतादिकृतो विशेषो यस्मात्तत् निर्विकल्पकम्। "नामजात्यादियोजनारहितं वैशिष्ट्यानवगाहि निष्प्रकारकम्" इति तत्वचिन्तामणिकृतः। अर्थात् विशेषणविशेष्यसम्बन्धानवगाहि, यच्च विशेषणता (प्रकारता)

शून्यं, विशेष्यताशून्यं संसर्गता (सम्बन्ध) शून्यं, वेति पर्यवसन्नोऽर्थः, यथा—चक्षुःसंयोगाद्यनन्तरं "घटः" इत्याकारकं घटत्वादिविशिष्टं ज्ञानं न सम्भवति, पूर्वं विशेषणस्य घटत्वादेर्ज्ञानाभावात, विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात्। तथा च प्रथमतो घट-घटत्वयोर्वैशिष्ट्यानवगाहि किञ्चिदिदमिति नामजात्यादियोजनारहितं ज्ञानं जायते तदेव निर्विकल्पम् इत्युच्यते। एतदेव सांख्यैरालोचनात्मकं सम्मुग्धं वेत्युक्तम्। सप्रकारकं ज्ञानं सविकल्पं, विशेषण-विशेष्यसम्बन्धावगाहि, विशेषणतानिरूपकं, विशेष्यतानिरूपकं, संसर्गता-निरूपकं इते बोध्यम्। नाम जाति-गुण-क्रियासहितमित्यर्थः। क्रमेणोदाहरणानि यथा—डित्थोऽयं, ब्राह्मणोऽयं श्यामोऽयं, पाचकोऽयमिति।

**लौकिकाऽलौकिकत्वाभ्यां पुनश्च द्विविधं हि तत।**
**संयोगादिप्रभेदेन सन्निकर्षोऽत्र षड्विधः ॥ ८ ॥**

भाषा—

लौकिक और अलौकिक ऐसे प्रत्यक्ष के दो भेद हैं। लौकिक प्रत्यक्ष में संयोग, समवाय, संयुक्त समवाय, संयुक्तसमवेतसमवाय, समवेत समवाय और विशेषणविशेष्यभाव ऐसे छः प्रकार के सन्निकर्ष कारण होते हैं।

---

टिप्पणी—

अत्र प्रत्यक्षज्ञाने इन्द्रियार्थयोर्यः सम्बन्धः स सन्निकर्षपदेनोच्यते। 'येनेन्द्रियेण यद्गृह्यते तेनेन्द्रियेण तद्गतसामान्यं तदभावश्च गृह्यते" (त० कौ०) इत्यनेन नियमेन घटप्रत्यक्षे घटो घटगतं रूपं तत्र च समवेत रूपत्वमित्यादीनि चक्षुषैव प्रत्यक्षीभवन्ति। तथापि तत्र घटस्य द्रव्यत्वेन, रूपस्य गुणत्वेन, रूपत्वस्य च सामान्यत्वेन विषयभेदात्तत्तत्प्रत्यक्षे चक्षुःसन्निकर्षो भिद्यते। स च "संयोगाद्द्रव्यग्रहणं, संयुक्तसमवायाद्गुणत्वादिप्रतीतिः, संयुक्तसमवेतसमवायाद्गुणत्वादिज्ञानं, समवायाच्छब्दग्रहणं, समवेतसमवायाच्छब्दत्वग्रहणं, सम्बद्धविशेषणतया चाऽभावग्रहणमिति षोढा सन्निकर्षः" इति कन्दलीकृदुक्तो बोध्यः।

एतस्य लौकिकत्वात्तज्जन्यं प्रत्यक्षमपि लौकिकमुच्यते। तत्र घट-पटादिद्रव्यीय-लौकिकप्रत्यक्षं प्रति संयोगः कारणं यथा—चक्षुषा "इह घटोऽस्ति" "घटोऽयम्" इति वा घटप्रत्यक्षजनने संयोगः सन्निकर्ष उपयुज्यते। एवं द्रव्यचाक्षुष-स्पार्शन-मानसप्रत्यक्षेष्विन्द्रियसंयोग एव सन्निकर्षः, चक्षुरादेर्घटादिना संयोगसत्त्वात्। एवं मनसा संयोगेनाऽऽत्मगृह्योऽहमस्मीति। बुद्धि-सुख-दुःख-इच्छा-द्वेष-प्रयत्नानां द्वयोरात्ममनसोः संयोगादुपलब्धिः। अत्र संयोगशब्देन संयुक्तसमवायो बोध्यो बुद्ध्यादीनामात्मसमवेतत्वात्। घटादिद्रव्ये समवायसम्बन्धेन वर्त्तमानस्य रूपादेरुक्तसाक्षात्कारं प्रति संयुक्तसमवायः कारणम्। यथा—घटे रूपादिकमस्तीतिप्रत्यक्षे चक्षुःसंयुक्ते घटे रूपस्य समवायात्। एवं शब्देतरगुणाः कर्म द्रव्यगता जातिश्च संयुक्तसमवायसन्निकर्षेण गृह्यन्ते। घटगतरूपे रूपत्वमस्तीति चक्षुषा रूपत्वसामान्यप्रत्यक्षे चक्षुःसंयुक्तसमवेतसमवायः सन्निकर्षः कारणम्। चक्षुःसंयुक्ते घटे रूपं समवेतं तत्र रूपत्वस्य समवायात्। एवं द्रव्यसमवेतसमवेतस्य चाक्षुष-रासन-घ्राणज-स्पार्शन-मानसेषु प्रत्यक्षेषु इन्द्रिय-संयुक्तसमवेतसमवाय एव सन्निकर्षो ज्ञेयः यथा—शब्देतरगुणगतायाः कर्मगताया जातेः। शब्दप्रत्यक्षे समवायः सन्निकर्षः कारणं कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रमिति श्रोत्रस्याऽऽकाशरूपत्वाच्छब्दस्य चाऽऽकाशगुणत्वेन तत्र समवायात्। शब्दत्वादिसामान्यप्रत्यक्षे समवेतसमवायः सन्निकर्षः कारणं, श्रोत्रसमवेते शब्दे शब्दत्वादेः समवायात्। अभावप्रत्यक्षं तु न साक्षादिन्द्रियेण किन्त्वधिकरणद्वारा तत्र समवायप्रत्यक्षे च इन्द्रियसंयुक्तविशेष्यता, इन्द्रियसंयुक्तविशेषणतारूपः सन्निकर्षः कारणम्। यथा "चक्षुःसंयुक्ते भूतले इह घटो नास्तीति" घटाभाव-प्रत्यक्षं तत्र चक्षुःसंयुक्तविशेष्यता नाम सन्निकर्षः। अत्र चक्षुःसंयुक्ते भूतले घटाभावस्य विशेष्यत्वात्। सप्तम्यन्तं विशेषणमिति नियमेन भूतलस्य विशेषणता बोध्या। "इदं भूतलं घटाभाववत्" इत्याकारके घटाभावप्रत्यक्षे तु चक्षुःसंयुक्तविशेषणता नाम सन्निकर्षः। चक्षुःसंयुक्ते भूतले घटाभावस्य विशेषणत्वात्। एवं विशेषणविशेष्यभावसन्निकर्षेण समवायस्यापि प्रत्यक्षं न्यायनये, वैशेषिकमते तु तस्यातीन्द्रियत्वादनु-मेयतैव।

**अलौकिके तु सामान्यलक्षणादिस्त्रिधा मतः ।**

भाषा—

अलौकिक प्रत्यक्षमें सामान्य लक्षण, ज्ञानलक्षण और योगज ऐसे तीन प्रकार के सन्निकर्ष होते हैं ।

---

टिप्पणी—

एवं लौकिकप्रत्यक्षे षोढा सन्निकर्षो वर्णितः, इदानीमलौकिकप्रत्यक्षहेतुभूतोऽलौकिकसन्निकर्ष उच्यते—अलौकिक इति, स च सामान्यलक्षणो ज्ञानलक्षणो योगजश्चेति त्रिविधः । तत्र समानानां भावोऽनागन्तुको नित्यो धर्मः सामान्यं, उक्तं च वात्स्यायनेन 'या समानां बुद्धिं प्रसूते भिन्नेष्वधिकरणेषु यया बहूनीतरेतरतो व्यावर्तन्ते, योऽर्थोऽनेकत्र प्रत्ययानुवृत्तिनिमित्तं तत्सामान्यं'' यथा—घटत्वादिजातिः एतत्सामान्यं लक्षणं विषयो यस्य तादृशः सन्निकर्षः । यथा—एवं घटमवलोक्य सकलघटानां ज्ञानं जातं तत्र घटत्वसामान्यं सन्निकर्षेण सर्वेषां घटत्ववतां भानं जायते, सोऽयं सन्निकर्षोऽतीतानागतवर्तमानानामिन्द्रियासन्निकृष्टानां सामान्याश्रयाणां सर्वासां व्यक्तीनामलौकिकं प्रत्यक्षं जनयतीति सिद्धान्तः ॥

ज्ञानं लक्षणं यस्येति ज्ञानलक्षणः सन्निकर्षः । "एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकम्'' इत्यनेन नियमेन पूर्वं घ्राणेन चन्दनसौरभसाक्षात्कारवतः पुरुषस्य पुनश्चक्षुषा चन्दनखण्डसाक्षात्कारेऽप्यात्वैव एतच्चन्दनं सुरभि इत्याकारकं यज्ज्ञानं जायते तत् सौरभं चन्दनं चन्दनत्वं चैतत्त्रियं विषयीकरोति । तत्र संयोगसन्निकर्षेण चन्दनज्ञानं, चक्षुःसंयुक्तसमवायसन्निकर्षेण चन्दनत्वज्ञानं च लौकिकसन्निकर्षजन्यत्वाल्लौकिकमेव, किन्तु घ्राणेन्द्रियसम्बन्धमन्तरा सौरभप्रत्यक्षेऽसमर्थेनापि चक्षुषा यत्सौरभज्ञानं तदलौकिकं चक्षुःसंयुक्तमनःसंयुक्ताऽऽत्मसमवेतज्ञानरूपेण ज्ञानलक्षणाख्येनालौकिकसन्निकर्षेण जातमिति बोध्यम् । एतदेव "उपनीतभानम्'' इत्याख्यातमाकरे ॥

योगजो "योगश्चित्तवृत्तिनिरोधः'' इत्युक्ताच्चित्तवृत्तिनिरोधरूपाद्योगाज्जातो धर्मविशेषः । अयं चालौकिके योगिप्रत्यक्षे कारणभूतो लौकिकसन्निकर्ष—

विशेषः। स च युक्त-युञ्जानरूपयोगिद्वैविध्याद्द्विविधः। तत्र युक्ताख्य-योगिनो योगजधर्मसन्निकर्षेण, "अस्मद्विशिष्टानां तु योगिनां युक्तानां योगज-धर्मानुगृहीतेन मनसा स्वात्मान्तराकाशदिक्कालपरमाणुवायुमनःसु तत्समवेत-गुण-कर्म-सामान्य-विशेषेषु समवाये चावितथं स्वरूपदर्शनमुत्पद्यते" इति प्रशस्तोक्तं वस्तुमात्रप्रत्यक्षं जायते, युञ्जानस्य तु चिन्ताविशेषोऽपि सहकारीति ज्ञेयम् ॥

पदस्यार्थ: पदार्थः इस व्युत्पत्ति से पदका जो अर्थ अभिधाशक्ति-संकेत द्वारा जिस पदसे जिस वस्तु का बोध होता है वह वस्तु उस पदका अर्थ है जैसे "घट" इस पद से हमें घड़ारूप वस्तु का ज्ञान होता है इससे यह निश्चय होता है कि घड़ा घट पदका अर्थ है, दूसरे प्रकारसे कहें तो जिस वस्तु के लिये शब्द प्रयोग होता है वह वस्तु पदार्थ है। शब्दप्रयोगके पहले हमें उस वस्तु का ज्ञान अवश्य होना चाहिए और ज्ञानके लिये उसका अस्तित्व-स्वरूपवत्व भी होना आवश्यक है, तभी उसमें अभिधेयत्व याने शब्दबोध्यत्व आसकता है। सारांश यह कि अस्तित्व, ज्ञेयत्व और अभिधेयत्व ये तीन धर्म जिसमें हों उसको हम पदार्थ कह सकते हैं। वह पदार्थ दो प्रकार के हैं, भावरूप तथा अभावरूप। अभावरूप पदार्थ में भी अपना कुछ स्वरूप रहता ही है वह ही उसका अस्तित्व माना जाता है।

न्याय वैशेषिक के समान आयुर्वेद में भी द्रव्य-गुण-कर्म-सामान्य-विशेष-समवाय और अभाव ऐसे सात पदार्थ माने जाते हैं। यद्यपि अभाव के लिये कोई पृथक् प्रमाण उपलब्ध नहीं होता है तथापि शब्द-स्पर्श-रूप-रस और गन्ध यह सब स्पर्शेन्द्रिय द्वारा जाने जाते हैं वैसे उनका अभाव भी स्पर्शेन्द्रियगोचर है। यह उक्ति अभावके पदार्थत्व स्वीकार के लिये पर्याप्त है।

अनुभव दो प्रकारका होता है, एक यथार्थ, दूसरा अयथार्थ। जो वस्तु जैसी हो उसको उसी प्रकार जानना यह यथार्थ अनुभव अथवा प्रमा कहा जाता है, और उससे विपरीत जानना यह अयथार्थ अनुभव अथवा अप्रमा कहा जाता है, जैसे स्थाणुको स्थाणुरूपमें जानना यह यथार्थ या प्रमा ज्ञान है और इससे विप-रीत स्थाणुको पुरुष रूपमें जानना यह अयथार्थ या अप्रमा ज्ञान है, यह प्रमा या यथार्थ ज्ञान जिसके द्वारा होता है उसको प्रमाण कहते हैं। प्रमाण का लघु लक्षण है 'प्रमायाः करणं प्रमाणं'। प्रमाके करण को प्रमाण कहते हैं, कार्य-मात्र के अनेक कारण होते हैं कई एक साधारण कारण होते हैं और कोई असाधारण भी होता है। जैसे रामने बाली को बाण से मारा, यहां बालीके वध में राम और बाण दोनो कारण हैं लेकिन केवल राम के व्यापार से बाली का वध नहीं हो सकता बीचमें बाणका व्यापाररूप व्यवधान है, इससे

राम आरादुपकारक अर्थात् दूरवर्ती साधारण कारण हुआ और बाण के व्यापार के अनन्तर तुर्त विना व्यवधान बाली का वध हुआ, इससे यहां बाण प्रकृष्टोपकारक—सन्निकृष्टवर्ती या साधकतम—असाधारण कारण हुआ। असाधारणं कारणं करणम्, साधकतमं करणम्, ऐसे इस असाधारण कारण को करण कहा है, यथार्थ ज्ञान प्रमा कहलाती है, इसको प्रमिति भी कहते हैं। इसका असाधारण कारणरूप करण प्रमाण कहा जाता है तथा इस प्रमाण द्वारा प्रमा-यथार्थ ज्ञान को प्राप्त करता है वह प्रमाता कहलाता है और प्रमाता जिसका ज्ञान प्राप्त करता है उसको प्रमेय कहते हैं, प्रमाण, प्रमेय और प्रमाता यह त्रिपुटी रहेगी तब ही प्रमा हो सकेगी, जिस वस्तु का ज्ञान प्राप्त करना है उस वस्तु का होना आवश्यक है। क्यों कि ज्ञान का कोई विषय तो होना ही चाहिये। जैसे घट, पट, यह सब ज्ञान के विषय हैं तब तो हमें घट, पट इत्यादि ज्ञान होता है इसको कहते है प्रमेय। घट, पट इत्यादि विषय होते हुए भी जब तक कोई ज्ञाता नहीं होगा तो ज्ञान किसको होगा, इस लिये ज्ञाता भी अवश्य चाहिये। ज्ञाता ही को अर्थात् प्रमाण द्वारा जो प्रमेय की प्रमा को ग्रहण करता है उसको प्रमाता कहते हैं, प्रमेय भी हो एवं प्रमाता भी हो किन्तु प्रमेय के यथार्थ ज्ञान के लिये जो साधन चाहिये वह न हो तो ज्ञान कैसे होगा? अतः प्रमा-यथार्थ ज्ञान का साधन करण-असाधारण कारणरूप प्रमाण भी चाहिये अर्थात् प्रमाता प्रमेय और प्रमाण के होने पर ही प्रमा-यथार्थ ज्ञान होता है, इस प्रमाण को आयुर्वेद शास्त्र में परीक्षा भी कहते हैं। यथार्थ ज्ञान प्राप्त करने के लिये पृथक्-पृथक् दर्शनकारों ने पृथक्-पृथक् प्रमाण माने हैं। आयुर्वेद में माने हुए प्रत्यक्ष, अनुमान, आप्तोपदेश और युक्ति, इन प्रमाणों में उन सब का अन्तर्भाव हो जाता है।

इन्द्रिय तथा विषय के साक्षात्सम्बन्ध से जो ज्ञान होता है उस को प्रत्यक्ष ज्ञान कहते हैं तथा उस इन्द्रिय को प्रत्यक्ष प्रमाण कहते हैं। नाक, जीभ, आंख, त्वचा, और कान ये पांच तथा मन ये ज्ञानेन्द्रियां हैं इनके द्वारा गन्ध, रस, रूप, स्पर्श, शब्द तथा चिन्त्य- विचार्य इत्यादि का साक्षात् ज्ञान होता है, कोई पुरुष "पर्वतपर अग्नि है" ऐसा हमें कहता है और वह पुरुष यदि विश्वास्य होता है

तब हमें अग्नि का जो ज्ञान होता है वह आप्तोपदेशरूप—अर्थात् शब्द प्रमाणजन्य कहाजाता है, जब हम पर्वत पर धुंए को देखकर यहां अग्नि होना चाहिये ऐसा ज्ञान प्राप्त करते हैं वह ज्ञान अनुमानजन्य कहा जाता है और अपनी आंखोंसे साक्षात् अग्नि का जो ज्ञान हम प्राप्त करते हैं वह ही प्रत्यक्ष ज्ञान कहाजाता है, यद्यपि कभी सीपमें हमें चांदीका ज्ञान भी होता है किन्तु वह भ्रमरूप होनेसें उसको यथार्थ प्रत्यक्ष ज्ञान नहीं कहा जाता, अतः भ्रम-संशयसे रहित ज्ञान को ही यथार्थ प्रत्यक्षज्ञान कहाजाता है, यह प्रत्यक्षज्ञान जिस इन्द्रिय द्वारा होता है उसके नामसे व्यवहृत होता है जैसे श्रावण-कानसे, त्वाच-त्वचासे, चाक्षुष-चक्षुसे, रासन-जीभसे, घ्राणज-नाकसे और मानस-मनसे ।

प्रत्यक्ष ज्ञानकी प्रक्रिया—आत्मा के साथ मनका, मनके साथ इन्द्रियका तथा इन्द्रिय के साथ पदार्थ का सम्बन्ध होने पर ही प्रत्यक्ष ज्ञान होता है जैसे घटका प्रत्यक्ष ज्ञान होने में घटसे नेत्र का सम्बन्ध होना चाहिये एवं नेत्रका मनसे सम्बन्ध होना चाहिये तथा मनका आत्मासे सम्बन्ध होना चाहिये । यदि प्रत्यक्ष ज्ञान का विषय जो घट, वह न हो तो भी ज्ञान नहीं होसकता क्यों कि विषयके विना किस का ज्ञान होगा, एवं घट के होने पर भी यदि नेत्र न हो या विकल हो तो भी ज्ञान नहीं हो सकेगा, वैसे घट एवं नेत्र के योग्य होने पर भी यदि मन कोई दूसरे विषय में लगा हुआ होगा तो भी ज्ञान नहीं हो सकेगा और ज्ञान तो आत्मा को ही होता है अतः उसकी उपस्थिति तो अनिवार्य रूप से ही अपेक्ष्य है इसीसे कहा है कि आत्मा-मन-इन्द्रिय तथा विषय के सन्निकर्ष से ही प्रत्यक्ष ज्ञान होता है।

इस प्रत्यक्ष ज्ञान के दो भेद माने गये हैं—बाह्य और आन्तर, कान नाक इत्यादि द्वारा जो प्रत्यक्ष होता है उसको बाह्य प्रत्यक्ष कहते हैं क्योंकि कान-नाक इत्यादि इन्द्रियां बाह्य करण हैं, और मन अन्तःकरण है इसलिये सुख दुःख इत्यादि का जो मनोद्वारा साक्षात् ज्ञान होता है उसको आन्तर प्रत्यक्ष कहते हैं ।

प्रत्यक्ष ज्ञान के और भी दो भेद हैं, एक निर्विकल्प, दूसरा सविकल्प, जब हम किसी वस्तु का प्रत्यक्ष करते हैं तब प्रथम निर्विकल्प ज्ञान होता है और उसके अनन्तर सविकल्प ज्ञान होता है । जैसे जब हम घट का प्रत्यक्ष करते

हैं तब घट नाम, उसमें रही हुई घटत्व जाति तथा घटत्व का सम्बन्ध इन सब का ज्ञान प्राप्त करते हैं। यह ज्ञान सविकल्प है, क्यों कि इसमें घट रूप विशेष्य तथा घटत्व रूप विशेषण भी रहता है किन्तु यह घट है ऐसा सविकल्प ज्ञान होने के पूर्व हमें यह कुछ है ऐसा जो नाम जाति इत्यादि रहित ज्ञान होता है वह ही निर्विकल्प ज्ञान है, इसको सांख्य वाले सम्मुग्ध ज्ञान कहते हैं। फिर भी प्रत्यक्ष ज्ञान के दो भेद माने जाते हैं—लौकिक प्रत्यक्ष और अलौकिक प्रत्यक्ष। ऊपर कहा हुआ छः प्रकार का जो प्रत्यक्ष है वह लौकिक प्रत्यक्ष कहा जाता है क्यों कि संयोग समवाय, इत्यादि छः प्रकार के लौकिक सन्निकर्ष द्वारा वह होता है। जब हम घट का प्रत्यक्ष करते हैं तब घट का, घटके रूप का तथा रूप में रहे हुए रूपत्व का भी हमें प्रत्यक्ष होता है किन्तु इनमें घट द्रव्य है, रूप गुण है तथा रूपत्व जाति है इन सबका एक प्रकार के सन्नि-कर्ष सम्बन्ध द्वारा ग्रहण होना असम्भव है अतः यहां पृथक् पृथक् सन्निकर्ष मानना अनिवार्य है।

**संयोग**—द्रव्य का प्रत्यक्ष संयोग सम्बन्ध से होता है। जिसका कभी वियोग भी हो ऐसे सम्बन्ध को संयोग कहते हैं।

**संयुक्त समवाय**—शब्द भिन्न गुण-कर्म-द्रव्यगत जाति इनका प्रत्यक्ष संयुक्त समवाय सम्बन्ध से होता है जिन दोनों में कोई एक जहां तक रहे वहां तक दूसरे के आश्रय में ही रहे ऐसे दो पदार्थों का सम्बन्ध समवाय कहा जाता है जैसे जाति-व्यक्ति, गुण-गुणी, इत्यादि का जो सम्बन्ध है उसको समवाय सम्बन्ध कहते हैं इसको अविनाभाव भी कहते हैं, क्यों कि ये जाति-व्यक्ति कभी पृथक् नहीं रह सकतीं। वैसे गुण-गुणी का भी समवाय सम्बन्ध होता है। जब हम घट में रहे हुए रूपत्व का प्रत्यक्ष करते हैं तब घट के रूप के साथ नेत्र का संयुक्त समवाय सम्बन्ध होता है, यहां घट नेत्रसे संयुक्त है और उस घटमें रूप समवाय सम्बन्ध से रहा है॥

**संयुक्तसमवेतसमवाय**—समवाय सम्बन्ध से जो रहता है, उसको समवेत कहते हैं। जब हम घट में रहे हुए रूपत्व का प्रत्यक्ष करते हैं तब घट के रूपत्व

के साथ नेत्र का संयुक्तसमवेतसमवाय सम्बन्ध होता है, यहां नेत्र से संयुक्त घट में रूप समवेत अर्थात समवाय सम्बन्ध से रहा है और रूपमें रूपत्व समवाय सम्बन्ध से रहा है।

**समवाय**—जब हम श्रोत्रेन्द्रिय द्वारा शब्द का प्रत्यक्ष करते हैं तब श्रोत्रेन्द्रिय तथा शब्द का समवाय सम्बन्ध होता है क्यों कि आकाश एक है और कर्णविवरस्थ आकाश ही श्रोत्रेन्द्रिय है तथा शब्द आकाश का गुण है और गुणगुणी का समवाय सम्बन्ध होता है अतः शब्दप्रत्यक्ष में श्रवणेन्द्रिय और शब्द का सम्बन्ध समवाय सम्बन्ध होता है॥

**समवेतसमवाय**—जब हम शब्दगत शब्दत्वरूप जातिका श्रवणेन्द्रिय द्वारा प्रत्यक्ष करते हैं तब शब्दत्व के साथ श्रवणेन्द्रिय का समवेतसमवाय सम्बन्ध होता है क्यों कि श्रवणेन्द्रिय में शब्द समवेत है अर्थात् समवाय सम्बन्ध से रहा है और उस शब्द में शब्दत्व समवाय सम्बन्ध से रहा है।

**विशेषणविशेष्यभाव**—किसी पदार्थ के अभाव का जब हम प्रत्यक्ष करते हैं तब अभाव भाव रूप न होने से ही इन्द्रिय द्वारा उसका साक्षात्प्रत्यक्ष तो हो नहीं सकता किन्तु अधिकरण द्वारा ही उसका प्रत्यक्ष होता है। इस अभाव प्रत्यक्ष में विशेषणविशेष्यभाव अर्थात् इन्द्रिय-संयुक्त विशेषणता सन्निकर्ष या इन्द्रियसंयुक्त विशेष्यता सन्निकर्ष होता है जैसे "घटाभाववद्भूतलम्" भूतल घटाभाववाला है इस प्रकार के अभाव प्रत्यक्ष में भूतल विशेष्य है और घटाभाव उसका विशेषण है अतः इस सम्बन्ध को विशेषणता सन्निकर्ष कहते हैं, और जब "भूतले घटाभावः" भूतल में घटाभाव है इस प्रकार का अभाव का प्रत्यक्ष होता है तब सप्तम्यन्त पद विशेषण होता है इस नियम से यहां पर भूतल विशेषण होता है और घटाभाव विशेष्य होता है अतः इस सम्बन्ध को विशेष्यता सन्निकर्ष कहते हैं।

मानसप्रत्यक्ष में मैं हूं ऐसा आत्मप्रत्यक्ष संयोग सन्निकर्ष द्वारा सुख दुःख इत्यादि का संयुक्तसमवेतसमवाय सन्निकर्ष द्वारा प्रत्यक्ष जानना चाहिये।

सामान्य नियम ऐसा है कि द्रव्य का चाक्षुष स्पार्शन और मानस प्रत्यक्ष संयोग सन्निकर्ष द्वारा होता है, द्रव्यसमवेत शब्दभिन्न गुण कर्म तथा द्रव्यगता जाति का चाक्षुष रासन-घ्राणज-स्पार्शन-मानस प्रत्यक्ष संयुक्तसमवाय सन्निकर्ष द्वारा होता है। द्रव्यसमवेतसमवेत शब्द भिन्न गुणगत तथा कर्मगत जाति का चाक्षुष-रासन-घ्राणज-स्पार्शन-मानस प्रत्यक्ष संयुक्तसमवेतसमवाय सन्निकर्ष द्वारा होता है। शब्दप्रत्यक्ष समवाय सन्निकर्ष द्वारा होता है और शब्दत्व प्रत्यक्ष समवेतसमवाय सन्निकर्ष द्वारा होता है।

अलौकिक सन्निकर्ष तीन प्रकार का है—सामान्यलक्षण, ज्ञानलक्षण और योगज। सामान्यलक्षण याने सजातीयविषयक ज्ञान जैसे महानसीय अग्नि के स्पर्श से यह अग्नि उष्ण है ऐसा महानसीय अग्नि की उष्णता का ज्ञान होता है तथापि उस ज्ञान के द्वारा भूत, भविष्यत् और वर्तमान यावत् अग्नि उष्ण होती हैं ऐसा जो हमें ज्ञान होता है वह सामान्य लक्षण सन्निकर्ष से होता है क्यों कि यहां केवल महानसीय अग्नि का ही प्रत्यक्ष होने पर भी उस अग्नि के समान धर्मवाली–सजातीय–समग्र अग्नि विषयक जो ज्ञान होता है वह सामान्य लक्षण–सजातीय विषयक–सन्निकर्ष द्वारा हुआ कहा जाता है।

ज्ञानलक्षण—चन्दन का नेत्र द्वारा प्रत्यक्ष होने पर यह चन्दन-सुगन्धि है ऐसा जो ज्ञान होता है वह ज्ञानलक्षण सन्निकर्ष द्वारा हुआ कहा जाता है। क्यों कि चन्दन के साथ केवल नेत्र का ही संयोग हुआ है घ्राणका संयोग हुआ नहीं है और नेत्र तो केवल रूप का ही ग्रहण कर सकता है गन्ध का ग्रहण नहीं कर सकता तथापि चन्दन के सुगन्धि होने का जो ज्ञान होता है वह ज्ञान-लक्षण सन्निकर्ष-( यह चन्दन सुगन्धि है ऐसा पूर्व में हुआ जो घ्राणज प्रत्यक्ष उससे उत्पन्न हुआ सुगन्ध का स्मरणात्मकज्ञान ) द्वारा होता है।

योगज—युक्त-युञ्जान ऐसे योगी की अवस्था के भेद से योगज सन्निकर्ष दो प्रकार का माना जाता है। योगाभ्यास जनित धर्म विशेष रूप सन्निकर्ष युक्त योगी को भूत, भविष्य और वर्तमान में रही हुई समीप या दूरवर्ती अतीन्द्रिय वस्तु का भी सर्वदा प्रत्यक्ष होता है, और युञ्जान योगी को ऐसे प्रत्यक्ष के लिये विचार करना पड़ता है यह प्रत्यक्षज्ञान योगज सन्निकर्ष द्वारा होता है।

## अथ अनुमानम्

**अनुमानं त्वनुमितेः करणं व्याप्तिधीर्हि तत् ॥ १० ॥**
**परामर्शोद्भवं ज्ञानं कथिताऽनुमितिर्बुधैः ॥**

भाषा—

अनुमिति के करण को अनुमान कहते हैं, वह अनुमान व्याप्ति-ज्ञानरूप होता है तथा परामर्श द्वारा उत्पन्न ज्ञान को अनुमिति कहते हैं।

---

टिप्पणी—

एवं प्रमाणज्येष्ठेऽस्मिन्प्रत्यक्षे लक्षिते सति ।
कथ्यतेऽवसरप्राप्तमनुमानस्य लक्षणम् ॥ ( न्या० मं० )

अथ प्रत्यक्षनिरूपणानन्तरं प्रत्यक्षपूर्वम् ( च० सू० ११-२१ ) इत्यनेन प्रत्यक्षस्यानुमानकारणत्वमुक्तम् । तच्च साध्य-साधनयोर्व्याप्य-व्यापकभाव-सम्बन्धविषयकं साधनविषयकं च प्रत्यक्षं ज्ञेयम् । यथा—प्रथमं महानसे वन्हि-धूमयोः सम्बन्धप्रत्यक्षं ततः पर्वते धूमप्रत्यक्षं तदनन्तरं पर्वते वन्ह्यनुमितिर्जायत इति उक्तहेतूपपत्तेः । एवमनुमानं प्रति इन्द्रियरूपधूमप्रत्यक्षकारणस्योपजी-व्यत्वात्, उपजीव्योपजीवकभावसङ्गत्याऽनुमानप्रमाणं निरूपयिष्यन्ग्रन्थ-कृत्प्रतिजानीते अनुमानमिति, व्याप्तिग्रहणादनुमीयते सम्यङ्निश्चीयते परोक्षोऽर्थो येन तदनुमानम् ( चक्र० ) इति व्युत्पत्तेरनुमितिकरणत्वमनु-मानस्य लक्षणं बोध्यम् । तच्च *व्याप्तिज्ञानरूपमित्याह "व्याप्तिधीः" इति, एतस्य व्याप्तिज्ञानस्य परामर्शद्वाराऽनुमितिं प्रत्यसाधारणकारणतया करणत्वं सुवचम् । परामर्शस्तु व्यापारः, व्याप्तिज्ञानजन्यत्वे सति व्याप्तिज्ञानजन्यानु-

---

*अनुमितिकरणं लिङ्गं तत्परामर्शोऽवान्तरव्यापार इति वैशेषिकाः, अनुमितिकरणं व्याप्तिज्ञानं तत्संस्कारोऽवान्तरव्यापार इति वेदान्तिनः । मीमांसकानां मते तु प्रत्यक्षं स्मृतिरूपं च ज्ञानद्वयमनुमानं यथा—पर्वतो धूमवान् इति प्रत्यक्षं, धूमो वह्निव्याप्यः, इति स्मृतिः ।

मितिजनकत्वात् एवं च तज्जन्यत्वे सति तज्जन्यजनकत्वरूपव्यापारत्वोपपत्तेः। लिङ्गाज्जातं लैङ्गिकम् ( उपस्कार० ) लिङ्गदर्शनं प्रमाणम् ( प्रशस्तपाद० ) इत्यादिषु लिङ्गपरामर्शस्य करणत्वाभिधानं तु "फलायोगव्यवच्छिन्नं कारणं करणम्" इति नवीनमतानुसारेण बोध्यम्। अनुमितिः फलम्, सा च वक्ष्यमाणलक्षणलक्षितपरामर्शजन्यज्ञानरूपेत्यर्थः। "मितेन लिंगेन पश्चान्मानमनुमानम्" ( वात्स्या० ) इति व्युत्पत्तेरेतस्या अप्यनुमानशब्देन व्यवहारः, तथाहि-"अनुमानं नाम तर्को युक्त्यपेक्षः" ( च० वि० ४-४ ) तर्कोऽत्राप्रत्यक्षं ज्ञानं, युक्तिः सम्बन्धोऽविनाभाव इत्यर्थः। तेनाविनाभावजं परोक्षज्ञानमनुमानमित्यर्थः ( चक्र० ) ननु अयं स्थाणुत्ववान्स्थाणुत्वाभाववान्वा, पुरुषत्ववान्पुरुषत्वाभाववान्वा इति संशयोत्तरं पुरुषत्वव्याप्यकरादिमानयमिति परामर्शानन्तरं पुरुष एवेति प्रत्यक्षज्ञानस्यापि परामर्शजन्यतया तत्र उक्तलक्षणस्यातिव्याप्तिरिति चेन्न, पक्षतासहकृतपरामर्शजन्यत्वस्य विवक्षितत्वात्।

**परामर्शस्तु व्याप्यस्य पक्षसम्बन्धवेदना ॥ ११ ॥**

भाषा–

व्याप्ति का आश्रय जो धूम इत्यादि लिङ्ग के पर्वत इत्यादि पक्ष में संयोग सम्बन्ध से रहने के ज्ञान को परामर्श कहते है।

---

टिप्पणी–

परामर्शस्वरूपमाह परामर्श इति, व्याप्यस्य व्याप्त्याश्रयस्य धूमादेः पक्षेण—पर्वतादिना यः सम्बन्धः–संयोगसम्बन्धः तस्य वेदना ज्ञानं परामर्शः। व्याप्तिविशिष्टं यत्पक्षधर्मताज्ञानमिति फलितोऽर्थः। व्याप्यत इति व्याप्यं तस्य भावो व्याप्यत्वं. व्याप्तिकर्मत्वं तच्चाल्पदेशकालवृत्तित्वम्। यथा–अत्र वह्निव्याप्यो धूम इत्यादौ धूमस्य वह्नेरपेक्षयाल्पदेशकालवृत्तित्वात्, वह्निसमवेतव्याप्तिक्रियाजन्यफलशालित्वरूपकर्मत्वाच्च व्याप्यत्वम्। एतच्च लिङ्गशब्देन हेतुशब्देन चाभिधीयते। तथा चोक्तम् "हेतुरपदेशो लिङ्गं प्रमाणं करणमित्यनर्थान्तरम् ( वै-सू-६-२-४ ) इति व्याप्नोतीति व्यापकः. तस्य भावो व्यापकत्वं–

व्याप्तिकर्तृत्वमधिकदेशकालवृत्तित्वम्। यथा—अत्र धूमापेक्षयाऽधिकदेशकालवृत्तित्वात्, व्याप्तिक्रियायाः समवायित्वाद्वह्नेर्व्यापकत्वम्। पक्षनिष्ठविशेष्यता-निरूपिता या हेतुनिष्ठा प्रकारता तन्निरूपिता या व्याप्तिनिष्ठाप्रकारता तच्छालिज्ञानं परामर्शः, इति निष्कर्षः। वह्निव्याप्यधूमवान्, पर्वतः, इति ज्ञाने वह्नेनिरूपितत्वसम्बन्धेन व्याप्तौ, तस्याश्च स्वरूपसम्बन्धेन धूमे, धूमस्य च संयोग-सम्बन्धेन पर्वतेऽन्वयः तेन पर्वतनिष्ठविशेष्यतानिरूपिता धूमनिष्ठप्रकारता, तन्निरूपिता व्याप्तिनिष्ठा प्रकारता वर्तते इति तस्य परामर्शत्वं सूपपन्नम्। ❀तच्च लिङ्गं त्रिविधं—अन्वयव्यतिरेकि, केवलान्वयि, केवलव्यतिरेकि चेति।

अन्वयव्यतिरेकि—अन्वयेन—हेतुसाध्ययोः साहचर्येण, व्यतिरेकेण—साध्याभाव-हेत्वभावयोः साहचर्येण च व्याप्तिमत्। यथा—यत्र यत्र धूमस्तत्र तत्र वह्निर्यथा महानसादौ, इत्यन्वयव्याप्तिः। यत्र यत्र वन्ह्यभावस्तत्र तत्र धूमाभावो यथा—जलह्रदादौ, इति व्यतिरेकव्याप्तिः। इत्थमुभयविधव्याप्तिमत्वात् धूमरूपं लिङ्गमन्वयव्यतिरेकीत्युच्यते।

केवलान्वयि—यत्र अन्वयेनैव व्याप्तिस्तत्। यथा घटोऽभिधेयः प्रमेयत्वात्पट-वत् इत्यत्र प्रमेयत्वं केवलान्वयि। यत्र यत्र प्रमेयत्वं तत्र तत्र अभिधेयत्वं यथा पटः इत्यन्वयव्याप्तिरेवास्ति, नतु यत्र यत्र साध्याभावः—अभिधेयाभावः तत्र तत्र हेत्वभावः—प्रमेयत्वाभावः, इति रूपाव्यतिरेकव्याप्तिरस्ति। अभिधेयत्वस्य प्रमेयत्वस्य च सर्वत्र सत्वात्, साध्याभावादेरेवाप्रसिद्धत्वात् (त.कौ.)

## साहचर्यस्य नियमो व्याप्तिरित्यभिधीयते।

भाषा—

**साध्यके साथ हेतु—साधन का जो अव्यभिचरित सामानाधिकरण्य उसको व्याप्ति कहते हैं।**

---

**टिप्पणी.**

परामर्शस्य व्याप्तिनिघ्नतया व्याप्तिं निराह साहचर्यस्येति, सहचरत

---

❀ मीमांसकास्तु अन्वयव्यतिरेक्याख्यमेकमेव लिङ्गमाहुः, वेदान्तिनः- अन्वयि-रूपमेकमेवेति। सांख्या वीतं (अन्वयि) अवीतं (व्यतिरेकि) इति द्विविधम्।

इति सहचरौ तयोर्भावः साहचर्यं—सामान्याधिकरण्यं तच्च साध्य-साधनयोरेकाधिकरणवृत्तित्वं तस्य नियमोऽवश्यंभावः, हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामान्याधिकरण्यरूपः, यथा पर्वतो वह्निमान्धूमात्, इत्यत्र हेतुर्धूमस्तदधिकरणं पर्वतः, तन्निष्ठोऽत्यन्ताभावो घटात्यन्ताभावो नतु वह्न्यत्यन्ताभावः, तत्प्रतियोगी घटः, अप्रतियोगी साध्यो वह्निः, तत्सामानाधिकरण्यं धूमे, इति लक्षणसमन्वयः। तथाच अवश्यंभाविसाध्यसामानाधिकरण्यं हेतोर्व्याप्तिरिति फलितम्। चरकोपि (सू-११-२२) दृष्ट्वा बीजात्फलं जातमिहैव सदृशं बुधाः, इत्येवं बीजफलयोः कारणकार्यलक्षणां व्याप्तिं दर्शयति, एतस्याभिनयश्च यत्र यत्र सहकारिकारणान्तरजलकर्षणादियुक्तं बीजं तत्र तत्र फलमिति। हेतुस्तावद्द्विविधः सद्धेतुरसद्धेतुश्चेति, तल्लक्षणं च प्रशस्तपादेनोक्तं यथा—अनुमेयेन सम्बद्धं प्रसिद्धं च तदन्विते। तदभावे च नास्त्येव तल्लिङ्गमनुमापकम्॥ यदनुमेयेनार्थेन देशविशेषे कालविशेषे च सहचरितं, अनुमेयधर्मान्विते चान्यत्र सर्वस्मिन्नेकदेशे वा प्रसिद्धं, अनुमेयविपरीते च सर्वस्मिन्प्रमाणतोऽसदेव तत् अप्रसिद्धस्यार्थस्यानुमापकं लिङ्गं सद्-हेतुर्भवति, अतो विपरीतोऽसद्धेतुः, अहेतुः—असाधकहेतुः, हेतुवदाभासमानत्वेन हेत्वाभास इत्युक्तोऽनुमितिप्रतिबन्धको भवति। जयन्तभट्टोप्याह "तत्र परोक्षार्थो लिङ्ग्यते गम्यतेऽनेनेति लिङ्गम्, तच्च पञ्चलक्षणम्, कानि पुनः पञ्च लक्षणानि पक्षधर्मत्वं, सपक्षधर्मत्वं, विपक्षाद्व्यावृत्तिः अबाधितविषयत्वं, असत्प्रतिपक्षत्वं चेति। सिषाधयिषितधर्मविशिष्टो धर्मी पक्षधर्मत्वं तदाश्रितत्वमित्यर्थः। साध्यधर्मयोगेन निर्ज्ञातं धर्म्यन्तरं सपक्षः तत्रास्तित्वम्, साध्यधर्मसंस्पर्शशून्यो धर्मी विपक्षः ततो व्यावृत्तिः, अनुमेयस्यार्थस्य प्रत्यक्षेणागमेन वानपहरणमबाधितविषयत्वम्, संशयबीजभूतेनार्थेन प्रत्यनुमानतया प्रयुज्यमानेनाऽनुपहतत्वमसत्प्रतिपक्षत्वम्, एतैः पञ्चभिर्लक्षणैरुपपन्नं लिङ्गमनुमापकं भवति" इति।

**पक्षोऽनुमित्सारहितो सिद्धिर्यत्र न विद्यते॥ १९॥**
**व्याप्यस्य पक्षसम्बन्धो विज्ञेया पक्षधर्मता।**

**भाषा—**

साध्य के सिद्ध करने की इच्छा से रहित ऐसी साध्य की सिद्धि

जिस अधिकरणमें नहीं होती है उसको पक्ष कहते हैं। और ऐसे पक्ष में धूम इत्यादि हेतुकी जो संयोग सम्बन्ध से उपस्थिति उसको पक्षता कहते हैं।

---

टिप्पणी

को नाम पक्ष इत्यादि अनुमित्सेति, अनुमातुमिच्छा यथा पर्वते वन्ह्यनुमितिर्मे जायतामित्याकारा सिषाधयिषापरपर्याया या इच्छा साऽनुमित्सोच्यते। तादृशानुमित्सया रहिता हीना या सिद्धिः इन्द्रियार्थसन्निकर्षजन्यः पर्वतो वह्निमान् इत्याकारकचाक्षुषनिश्चयः, यत्र यस्मिन्नधिकरणे न विद्यते स पर्वतादिः पक्षः पक्षशब्दाभिधेयः. सिषाधयिषाविरहविशिष्टासद्ध्यभाववत्वेनोक्ता या पक्षता पक्षवृत्तिधर्मः तादृशपक्षताया आश्रय इत्यर्थः। ननु पर्वतो वह्निमान् इत्याकारकचाक्षुषनिश्चयरूपसिद्धेरनुमितिप्रतिबन्धकत्वेऽपि पर्वते वन्ह्यनुमितिर्मे जायतामितीच्छायां अनुमितिर्जायते इति चेन्न, तत्र सिषाधयिषाया उत्तेजकत्वात्, तस्मात्सिषाधयिषाविरहविशिष्टसिद्धिरनुमितिप्रतिबन्धिका तदभावश्च पक्षता इति पर्यवसितोर्थः। विशिष्टाभावश्च त्रिधा—विशेषणाभावप्रयुक्तः विशेष्याभावप्रयुक्तः विशेषणविशेष्य-उभयाभावप्रयुक्तः। तथाहि—उक्तोदाहरणे सिद्धिसत्वेपि सिषाधयिषाविरहरूपविशेषणाभावाद्विशेषणाभावप्रयुक्तो विशिष्टाभावः। यत्र च सिषाधयिषाविरहोस्ति सिद्धिश्च नास्ति तत्र सिषाधयिषाविरहरूपविशेषणसत्वेपि सिद्धिरूपविशेष्यस्याभावाद्विशेष्याभावप्रयुक्तो विशिष्टाभावः। यथा—गृहाभ्यन्तरस्थितपुरुषस्य सिषाधयिषाया अभावेपि मेघगर्जनद्वारा गगनं मेघवत् मेघगर्जनात् इत्यनुमित्युदयः। यत्र च सिषाधयिषाविरहाभावः सिद्ध्यभावश्च तत्र सिषाधयिषाविरहरूपविशेषणस्य सिद्धिरूपविशेषस्य चाभावाद्विशेषण-विशेष्य-उभयाभावप्रयुक्तो विशिष्टाभावः। यथा—पर्वते वह्निसंशये सिषाधयिषायां च अनुमितिर्जायते। तदित्थं यत्र सिद्धिर्नास्ति तत्र सिषाधयिषायां सत्यामसत्यामपि पक्षता, एवं यत्र सिषाधयिषास्ति तत्र सिद्धौ सत्यामसत्यां च पक्षता।

**पूर्ववच्छेषवत्सामान्यतो दृष्टमिति त्रिधा ॥ १३ ॥**

भाषा-

वह अनुमान पूर्ववत शेषवत् तथा सामान्यतोदृष्ट ऐसे तीन प्रकार का होता है।

---

टिप्पणी—

इत्थं सामान्यतोलक्षितमनुमानं पूर्ववत्, शेषवत्, सामान्यतो दृष्टम्, इति त्रिधा भेदत्रयापेतं भवति। तदुक्तं प्रत्यक्षपूर्वं त्रिविधं त्रिकालं चानुमीयते ( च० सू० ११-२१ ) त्रिविधमनुमानमाख्यातम् ( सां० का० ) पूर्ववत्—पूर्वं कारणं तद्वत्–तल्लिङ्गम् ( गौ० वृ० ) यत्र कारणेन कार्यमनुमीयते तत्पूर्ववदित्युच्यते अत्र तदस्यास्तीति विहितो मतुप्प्रत्ययः। यथा—बीजात्फलमनागतम् ( च० सू० ११-२१ ) अथवा इवार्थे वतौ यथापूर्वमित्यर्थः, यत्र यथापूर्वं प्रत्यक्षभूतयोरन्यतर-दर्शनेनान्यतरस्याप्रत्यक्षस्यानुमानं यथा धूमेनाग्नेरिति वात्स्यायनः, अथवा पूर्वमन्वयव्याप्तिस्तद्वत् (गौ० वृ०) केवलान्वयीत्यर्थः। शेषवत्–शेषः कार्यं तद्वत्, यथा—मैथुनं गर्भदर्शनात् ( च० सू० ११-२१ ) अथवा शिष्यते–परिशिष्यत इति शेषः, स एव विषयतया यस्यास्त्यनुमानज्ञानस्य तच्छेषवत् ( सां० कौ० ) प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे संप्रत्ययः परिशेषः ( सि० चं० ) इत्युक्तेः परिशेषोऽस्य नामान्तरम्। यथा—शब्दोऽष्टद्रव्यातिरिक्तद्रव्याश्रितोऽष्टद्रव्यागुणत्वे सति गुणत्वाद्रूपवत् इति। अथवा शेषो व्यतिरेकव्याप्तिस्तद्वत्, केवलव्यतिरेकी-त्यर्थः। सामान्यतोदृष्टम्—सामान्यतः कार्यकारणभिन्नात्कस्माच्चिल्लिङ्गात् दृष्टम्। व्रज्यापूर्वकमन्यत्र दृष्टस्यान्यत्र दर्शनं यथा आदित्यस्य, तस्मादस्ति अप्रत्यक्षस्यापि आदित्यस्य गतिः इति। अथवा यत्र अप्रत्यक्षे लिङ्गलिङ्गिनोः सम्बन्धे केनचिदर्थेन लिङ्गस्य सामान्यादप्रत्यक्षो लिङ्गी गम्यते तत्। यथा–इच्छादिभिरात्मा, इच्छादयो गुणाः, गुणाश्च द्रव्यसंस्थानाः तद्य एषां स्थानं स आत्मा इति ( वात्स्या० )। अथवा कार्य-कारणभिन्नलिङ्गकमनुमानं यथा—पृथिवीत्वेन द्रव्यत्वानुमानम् (गौ० वृ० ) अथवा अन्वयव्यतिरेकि, अन्वयेन व्यतिरेकेण च व्याप्तिमदित्यर्थः। त्रिकालमित्यनेन त्रिकालविषयत्वमनुमानस्य दर्शयति, तथा चोक्तं वात्स्यायनेन

सदसद् (वर्तमानावर्तमान) विषयकमनुमानं कस्मात्त्रैकाल्यात् त्रिकालयुक्ता अर्था अनुमानेन गृह्यन्ते, भविष्यतीत्यनुमीयते, भवतीति, अभूदिति च। यथा-अत्र धूमदर्शनाद्वन्हेरनुमानं वर्तमानकालिकं, गर्भदर्शनान्मैथुनानुमानं भूतकालिकं, एवं बीजदर्शनात्फलानुमानं भविष्यत्कालिकं बोध्यम्।

इति मतुपि वतौ वा प्रत्यये वर्तमाने, त्रिविधमिदमिहोक्तं युक्तमेवानुमानम्॥ (न्या० मं०)

**स्वपरार्थेति भेदेन तदेव द्विविधं पुनः**
**तत्रादिमं ज्ञानरूपं न्यायरूपं तथान्तिमम्॥ १४॥**

भाषा—

वह अनुमान स्वार्थानुमान तथा परार्थानुमान ऐसे दो प्रकार का है उनमें स्वार्थानुमान तो व्याप्ति तथा पक्षधर्मता के ज्ञान से होता है और परार्थानुमान पञ्चावयव-न्यायरूप है।

---

टिप्पणी—

तदेव पूर्वप्रकृतमनुमानं स्वार्थं परार्थं चेति द्विविधं- द्वे विधे प्रभेदौ यस्य तत् द्विप्रकारं भवतीति शेषः। स्वस्य अर्थः साध्यसंशयनिवृत्तिरूपप्रयोजनं यस्मात्तत् स्वार्थम्। परस्य अर्थः प्रयोजनं यस्मात्तत्परार्थम्। इह परशब्देन संशयित-विपर्यस्त-अव्युत्पन्नानामन्यतमस्य ग्रहणं संशयितविपर्यस्ताव्युत्पन्नानां परेषां स्व--निश्चितार्थप्रतिपादनं परार्थानुमानमिति प्रशस्तोक्तेः। तत्र तयोर्मध्ये आदिमं-प्रथमं-स्वार्थानुमानं ज्ञानात्मकं-व्याप्तिपक्षधर्मतासंवेदनं, यथा--येन पुरुषेण स्वयमेव महानसादौ साध्यसाधनयोर्व्यभिचारज्ञानविरहसहकृतसाहचर्यदर्शनेन यत्र यत्र धूमस्तत्र तत्र वह्निरिति व्याप्तिर्गृहीता स एव कदाचित्पर्वतसामीप्यं प्राप्तस्तद्गते चाग्नौ सन्दिहानः पर्वतेऽविच्छिन्नमूलां धूमलेखां पश्यन् "एकसम्बन्धि-ज्ञानमपरसम्बन्धिस्मारकम्" इति नियमेन उद्बुद्धसंस्कारः, धूमो वह्निव्याप्यः, इति व्याप्तिं स्मरति ततस्तस्य वह्निव्याप्यधूमवानयमिति ज्ञानं तस्माच्च पर्वतो वह्निमानित्य-नुमितिश्चोत्पद्यते तदेतत्स्वार्थानुमानम्। तथा अन्तिमं द्वितीयं परार्थं तु न्यायरूपं न्यायो हि परार्थानुमानमिति सर्वदर्शनसंग्रहकृदुक्तेः। "साधनीयस्यार्थस्य यावति

शब्दसमूहे सिद्धिः परिसमाप्यते स पञ्चावयवोपेतवाक्यात्मको न्यायः" इति वात्स्यायनः, अवयवाश्च *प्रतिज्ञाहेतूदाहरणोपनयनिगमान्यवयवाः (न्या० सू० १-४-३२) इति गौतमः। काणादैश्च प्रतिज्ञा–अपदेश–निदर्शन–अनुसन्धान–प्रत्याम्नायेति पर्यायैः स्वीकृता ग्राह्याः। ननु सांख्यैर्मीमांसकैर्वेदान्तिभिश्च उदाहरणादय उदाहरणान्ता वा त्रय एवावयवाः प्रोक्तास्त एव लाघवात्कुतो न ग्राह्या इति चेन्न, प्रतिज्ञा-स्थापनाख्यामवयवद्वयीमधिकृत्य चरकेण पञ्चानामेवावयवानामभिधानात्। तत्र प्रतिज्ञा नाम साध्यवचनम् (च० वि० ८-३०) पक्षे साध्यस्य निर्देशः, तदुक्तं, साध्यनिर्देशः प्रतिज्ञा ( न्या०सू० १-१ ) साध्यवत्तया पक्षवचनमित्यर्थः। प्रतिज्ञातोऽर्थो हेत्वादिभिः स्थाप्यते तस्मात्ते स्थापनाया अवयवाः। स्थापना नाम तस्या एव प्रतिज्ञाया हेतुदृष्टान्तोपनयनिगमनैः स्थापना ( च० वि० ८-३१ ) तत्र पूर्वं प्रतिज्ञा पश्चात्स्थापना किं हि अप्रतिज्ञातं स्थापयिष्यतीति ( च० वि० ८-३१ ) हेतुर्नाम उपलब्धिकारणम् ( च० वि० ८-३२ ) पक्षे साध्यस्य ज्ञानकारणमित्यर्थः। तथा चोक्तम्---- उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः। तथा वैधर्म्यात् [ न्या० सू० १-१-३४-३५ ] लिङ्गवचनमपदेशः ( हेतुः ) पञ्चम्यन्तं लिङ्गप्रतिपादकं वचनं हेतुरिति निष्कर्षः। ज्ञानकारणमिह प्रत्यक्षादित्वेन चतुर्विधम्, तत्प्रत्यक्षम्-अनुमानम्-ऐतिह्यम्-औपम्यम्-इति एभिर्हेतुभिः ( प्रमाणैः ) यदुपलभ्यते तत्तत्त्वम् ॥ ( च० वि० ८ ) इति चरकोक्तेः, इहाऽऽयुर्वेदनये औपम्यस्य पृथक्सत्ताऽभावेऽपि वादमर्यादाभ्युपगमेन तत्स्वहस्तितमित्यवधेयम्।

दृष्टान्तः–दृष्टान्तवचनम् उदाहरणम्, साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम् ( न्या० सू० १-१ ) उदाहरणं तु प्रकृतसाध्यसाधनाविनाभावप्रतिपादको न्यायावयवः ( उपस्कार० ) व्याप्तिप्रतिपादकं दृष्टान्तवचनमुदाहरणमित्यर्थः। दृष्टान्तो नाम यत्र मूर्खविदुषां बुद्धिसाम्यं यो वर्ण्यं वर्णयति ( च० वि० ८-३४ ) इत्युक्तेः।

---

*जिज्ञासा—संशयः–शक्यप्राप्तिः–प्रयोजनं–संशयव्युदासश्चेति प्रतिज्ञासहिता दशावयवा इति जरन्नैयायिकाः।

**उपनयः**--उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः ( न्या० सू० १-१-३८ ) अत्र उपसंह्रियते हेतुः पक्षेऽनेनेत्युपसंहारः इति व्युत्पत्तिर्ज्ञेया ।

**निगमनम्**--निगम्यन्ते-समर्थ्यन्ते--सम्बन्ध्यन्तेऽनेन प्रतिज्ञाहेतूदाहरणोपनया एकत्र इति निगमनम् ( वात्स्यायन० ) हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनम् ( न्या० सू० १-१-३९ ) व्याप्तिविशिष्टपक्षधर्मस्य ( हेतोः ) कथनेन साध्यविशिष्टपक्षस्य ( प्रतिज्ञातार्थस्य ) कथनमित्यर्थः, तदित्थम्-नित्यः पुरुषः, इति प्रतिज्ञा । हेतुः अकृतकत्वात् इति । दृष्टान्तः यथा आकाशमिति । उपनयः--यथा च अकृतकमाकाशं तच्च नित्यं तथा पुरुषः इति । निगमनम्--तस्मान्नित्यः इति । ( च० वि० ८-३१ ) अत्र पक्षज्ञानं प्रतिज्ञायाः, लिङ्गज्ञानं हेतोः, व्याप्तिज्ञानमुदाहरणस्य, पक्षधर्मताज्ञानमुपनयस्य, अबाधितत्वादिकं निगमनस्य च प्रयोजनं बोध्यम् । अत्र अकृतकत्वेन हेतुना नित्यस्य आकाशस्य दृष्टान्तत्वेन कथनं न्यायवैशेषिकसमयानुसारेण बोध्यमायुर्वेदसमये तु परं खादीन्यहङ्कारादुत्पद्यन्ते यथाक्रमम् ( च० शा० १- ) इति आकाशस्य कृतकतास्वीकारात् ।

**अथ हेत्वाभासनिरूपणम्,** अहेतुर्नाम प्रकरणसमः संशयसमो वर्ण्यसमश्चेति ( च० वि० ८-५७ ) चरके हेत्वाभासत्रयमुक्तम्, अत्र अहेतुशब्देन हेत्वाभासस्यैव ग्रहणं, अहेतवो हेत्वाभासा इति तत्रैव वक्ष्यमाणत्वात् । **प्रकरणसमः**--प्रक्रियते साध्यत्वेनाधिक्रियते इति व्युत्पत्त्या प्रकरणं पक्षः तेन समः ( चक्र ) यथा अन्यः शरीरात् आत्मा तस्मात् नित्यः, शरीरं हि अनित्यम् अतो विधर्मिणा च आत्मना भवितव्यम् इति एष च अहेतुः । नहि य एव पक्षः स एव हेतुः इति ( च० वि० ८-५७ ) अत्र आत्मनो नित्यत्वं शरीरान्यत्वे एव, शरीरान्यत्वं च आत्मनो नित्यत्वे एव सिध्यति । आत्मा नित्यः शरीरान्यत्वात् इत्यत्र आत्मनित्यत्वं साध्यतया पक्षः, तदेव आत्मा शरीरादन्यः, नित्यत्वात् इत्यत्र हेतुः क्रियते, अत्र अन्यत्वं नित्यत्वं चोभयमपि साध्यमिति रहस्यम् ।

**संशयसमः**—य एव संशयहेतुः स एव चेत्संशयच्छेदहेतुत्वेनोपादीयेत तदा संशयहेतुसाम्यात्संशयसमोऽहेतुत्वाभासः स्यात्, यथा—अयमायुर्वेदैकदेशमाह किंतु अयं चिकित्सकः स्यान्नवेति संशये परो ब्रूयात्, यस्मादयमायुर्वेदैकदेशमाह तस्माच्चिकित्सकोऽयमिति (च० वि० ८-५७) अत्र आयुर्वेदैकदेशाभिधानं चिकित्सकाचिकित्सकागमकत्वेन संशयहेतुः, स एव संशयच्छेदने न समर्थो भवतीति निष्कर्षः ।

**वर्ण्यसमः**—यो हेतुर्वर्ण्याविशिष्टः—वर्ण्येन-साध्येन अविशिष्टः—तुल्यः, असिद्धत्वात्साध्यवत्साधनीयः स वर्ण्यसमो नामा हेतुः, अत्र हेतोश्च साध्यत्वं हेतुमतो दृष्टान्तस्यापि साध्यत्वमित्याशयः, यथा कश्चिद्ब्रूयात् अस्पर्शवत्वात् बुद्धिरनित्या शब्दवत् । अत्र अस्पर्शवत्वयोगादनित्यत्वेन बुद्धिः साध्या, एवं शब्दोपि साध्यः, नहि साध्यो दृष्टान्तो भवति अतः अस्पर्शवत्वरूपो हेतुर्वर्ण्यसमः । अत्र कालात्ययोपदिष्टासिद्धयोर्द्वयोरपीहानुक्तयोर्ग्रहणं कर्तव्यम् इति चक्रः । त्रय एव हेत्वाभासा इति शाक्याः (न्या० मं०) काणादे च अप्रसिद्धोऽनपदेशोऽसन्दिग्धश्चानपदेशः वै सू-३-१ १५ इति त्रय एव उक्ता वृत्तिकृता चकारेण बाधसत्प्रतिपक्षौ समुच्चितौ, किन्तु, बाधसत्प्रतिप्रतिपक्षौ तु काश्यपीये मते न स्वतंत्रौ, सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकालाः पञ्च हेत्वाभासाः (न्या० सू० १-२-४) इति गौतमीयमतमनुधावति "विरुद्धासिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीत्" इत्यभिधानात्सूत्रकारस्वरसो हेत्वाभासत्रित्वे एवेति उपस्कारकृत् ।

**सव्यभिचार-विरुद्ध-सत्प्रतिपक्ष-असिद्ध-बाधिताः** पञ्च हेत्वाभासाः ।

**(१) सव्यभिचारोनैकान्तिकः**—स त्रिधा—साधारणासाधारणानुपसंहारिभेदात् ।

**साधारणः**—साध्याभाववद्वृत्तिः साधारणः यथा-पर्वतो वन्हिमान् प्रमेयत्वात् इति अत्र प्रमेयत्वं हेतुः साध्याभाववति—वन्ह्यभाववति—हृदे विद्यते ।

**असाधारणः**—सर्वसपक्षविपक्षव्यावृत्तः केवलपक्षवृत्तिः असाधारणः । यथा—शब्दो नित्यः शब्दत्वात् । अत्र शब्दत्वं हेतुः सर्वेभ्यः सपक्षेभ्यः नित्येभ्यः सर्वेभ्यो विपक्षेभ्यः अनित्येभ्यश्च व्यावृत्तः सन् केवलं शब्दे एव विद्यते ।

**अनुपसंहारी**—अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी। यथा- सर्वमनित्यं प्रमेयत्वात्, अत्र सर्वस्यापि पक्षत्वात् दृष्टान्तो नास्ति।

(२) **विरुद्धः**—साध्याभावव्याप्तो हेतुर्विरुद्धः, यथा-शब्दो नित्यः कृतकत्वात्, घटवत्। अत्र कृतकत्वं हि साध्याभावेन-नित्यत्वाभावेनानित्यत्वेन व्याप्तम्।

(३) **सत्प्रतिपक्षः**—यस्य साध्याभावसाधकं हेत्वन्तरं विद्यते स हेतुः सत्प्रतिपक्षः; यथा-शब्दो नित्यः श्रावणत्वात् शब्दत्ववत्। अत्र साध्यं नित्यत्वं तदभावोऽनित्यत्वं तस्य साधकोऽपरो हेतुर्विद्यते यथा--शब्दोऽनित्यः कार्यत्वात्, घटवत्, इति। तस्मात् श्रावणत्वं हेतुः सत्प्रतिपक्षः।

(४) **असिद्धस्त्रिविधः**—आश्रयासिद्धः, स्वरूपासिद्धो व्याप्यत्वासिद्धश्चेति।

**आश्रयासिद्धः**—यस्य हेतोः आश्रयः--पक्षः--अप्रसिद्धः स हेतुः आश्रयासिद्धः यथा गगनारविन्दं सुरभि अरविन्दत्वात् अरविन्दवत्। अत्र अरविन्दत्वहेतोराश्रयः गगनारविन्दं तच्च नास्ति एव।

**स्वरूपासिद्धः**—यो हेतुः आश्रये-पक्षे-नागवम्यते स स्वरूपासिद्धः यथा—शब्दोऽनित्यश्चाक्षुषत्वात् रूपवत्, अत्र चाक्षुषत्वं पक्षे नास्ति, शब्दस्य श्रावणत्वात्।

**व्याप्यत्वासिद्धः**—सोपाधिको हेतुर्व्याप्यत्वासिद्धः, साध्यव्यापकत्वे सति साधनाव्यापक उपाधिः, सोपाधिकत्वेन यत्र व्याप्तिर्न गृह्यते स हेतुः व्याप्यत्वासिद्धः, यथा पर्वतो धूमवान् वह्निमत्वात्। अत्र धूमः साध्यः, वह्निश्च साधनम्, आर्द्रेन्धनसंयोग उपाधिः तथाहि—यत्र धूमस्तत्रार्द्रेन्धनसंयोग इति साध्यव्यापकत्वं, यत्र वह्निस्तत्र आर्द्रेन्धनसंयोगो नास्ति, अयोगोलके वह्निसत्वेपि आर्द्रेन्धनसंयोगाभावात् इति साधनाव्यापकत्वम् एवं आर्द्रेन्धनसंयोगस्य साध्यव्यापकत्वे सति साधनाव्यापकत्वात् उपाधित्वम्। सोपाधिकत्वाद्वन्हिमत्वं हेतुर्व्याप्यत्वासिद्धः।

( ५ ) **बाधितः**—यस्य हेतोः साध्याभावः प्रमाणान्तरेण निश्चितः स हेतुः बाधितः, यथा—वह्निः अनुष्णः द्रव्यत्वात्। अत्र अनुष्णत्वं साध्यं, तदभाव उष्णत्वं स्पार्शनप्रत्यक्षेण निश्चीयते तस्मात् द्रव्यत्वं हेतुर्बाधितः।

किसी जिस प्रत्यक्ष वस्तु के ज्ञान से किसी अप्रत्यक्ष वस्तु का ज्ञान होता है उसको अनुमान कहते है क्योंकि अनुमीने प्रत्यक्षज्ञान के पीछे मीयते परोक्षार्थो येन जिस प्रत्यक्षज्ञानरूप हेतु से अप्रत्यक्ष पदार्थ का ज्ञान होता है उसको अनुमान कहते हैं जैसे हम पर्वत पर धूंए को देख करके वहां अग्नि है ऐसा जो निश्चय करते हैं इसमें धूंए का तो हमें चक्षुसे प्रत्यक्ष ज्ञान हुआ है किन्तु अग्नि का प्रत्यक्ष ज्ञान नहीं हुआ है तो भी हम धूंए के ज्ञानसे अग्निका ज्ञान प्राप्त कर सकते हैं क्योंकि धूंआ अग्नि का लिङ्ग है और अग्नि लिङ्गी है ऐसा हमें प्रथम ज्ञान हुआ है। हमने पहले रसोईघर में धूंआ तथा अग्निका साहचर्य देखा है, जहां जहां हमने धूंआ देखा है वहां वहां अग्नि को भी अवश्य देखी है जिसके जरिये आज पर्वत पर भी धूंए को देखकर वहां भी अग्नि होनी चाहिये ऐसा निश्चय कर सकते हैं। इसमें अग्नि अप्रत्यक्ष होने से उसको हम धूंए द्वारा सिद्ध करना चाहते हैं अतः अग्नि को साध्य कहते है तथा इस साध्य अग्नि की सिद्धि हम धूंए द्वारा करना चाहते हैं अतः धूंए को साधन कहते हैं और यहां पर्वत रूप अधिकरण में हम अग्नि की सिद्धि करना चाहते हैं इससे पर्वत को पक्ष कहते हैं, पर्वत पर अग्नि है ऐसा जो निश्चित ज्ञान होता है उसको अनुमिति और उसके करण को अनुमान कहते हैं, अनुमान के द्वारा अनुमिति होती है, अनुमान तो करण है इससे कोई व्यापार भी होना चाहिये। वह है परामर्श, जहां जहां धूंआ होता है वहां वहां अग्नि भी होती है इतने व्याप्तिज्ञानमात्र से कोई फल नहीं हो सकता। जबतक जिस पर्वत पर हमें अग्नि का निश्चय करना है उस पर्वत पर यदि हमें धूंए का ज्ञान न हो और पर्वत पर केवल धूए का ज्ञानरूप पक्षता के होने से भी कोई फल नहीं हो सकता। जबतक इसके पहिले वह धूंआ अग्नि का व्याप्य है ऐसा ज्ञान न हो, इससे पर्वत पर धूंआ है और वह धूंआ अग्नि का व्याप्य है ऐसा ज्ञान अवश्य होना चाहिये, इस ज्ञान को ही परामर्श कहते हैं, अर्थात् केवल व्याप्तिज्ञान अथवा केवल पक्षधर्मताज्ञानसे अनुमिति हो ही नहीं सकती किन्तु दोनों हों तब ही अनुमिति होती है। इसलिये व्याप्तिज्ञान तथा पक्षधर्मताज्ञान इन दोनों के मिलने से जो ज्ञान होता है वह परामर्श कहा जाता है और इस परामर्श से ही अनुमिति होती है।

जो अल्पदेशकाल में रहता है वह व्याप्य तथा जो अधिक देशकालमें रहता है वह व्यापक कहा जाता है। जैसे अग्नि की अपेक्षा धूंआ अल्पदेशकाल में रहता है और धूम की अपेक्षा अग्नि अधिक देशकाल में रहती है, तपे हुए लोहे के गोले में अग्नि होती है किन्तु वहां धूँआ नहीं होता इससे यह निश्चय हुआ कि धूंए को छोड़ कर अग्नि रह सकती है किन्तु धूंआ अग्नि को छोड़ कर नहीं रह सकता। इससे यह निर्णय हुआ कि धुँआ व्याप्य है इसको साधन और लिङ्ग भी कहते हैं तथा अग्नि व्यापक है इसको साध्य और लिङ्गी भी कहते हैं।

व्याप्ति का अर्थ है अविनाभाव सम्बन्ध, जिसके बिना जो रहही नहीं सकता उन दोनो के सम्बन्ध को ही अविनाभाव या व्याप्ति कहते हैं। व्याप्ति में दो अवयव होते हैं एक व्याप्य दूसरा व्यापक, व्यापक व्याप्ति का कर्ता है और व्याप्य व्याप्ति का कर्म। यद्यपि अग्नि और धूंए का साहचर्य देखा जाता है जहां जहां धूंआ होता है वहां वहां अग्नि भी होती है इससे इन दोनों में व्याप्ति कही जाती है, किन्तु इन दोनों में व्याप्य कौन और व्यापक कौन। जहां जहां धूंआ होता है वहां वहां अग्नि भी होती है यह तो अनुभवसिद्ध है तथापि जहां जहां अग्नि होती है वहां वहां सर्वत्र धूंआ भी होता है ऐसा अनुभवसिद्ध नहीं है, जैसे तपे हुए लोहे के गोले में अग्नि के होते हुए भी वहां धूंआ देखने में नहीं आता, इससे यह निश्चय होता है कि धूंआ तथा अग्नि साथ में पाये जाते हैं तो भी धूँआ अल्पदेश में रहने वाला है तथा अग्नि अधिक देश में रहने वाली है। धुँए को देख कर हम अग्नि की कल्पना कर सकते हैं क्यों कि धूंआ कभी अग्नि को छोड़ कर नहीं रहता किन्तु अग्नि को देख कर धुँए की कल्पना नहीं कर सकते क्यों कि धूंए को छोड़ कर भी तपे हुए लोहे के गोले में अग्नि रह सकती है। इससे धूंआ अग्नि का सूचक-चिह्न, लिङ्ग या व्याप्य हुआ और अग्नि लिङ्गी या व्यापक हुआ।

लिङ्ग तीन प्रकार का होता है-अन्वयव्यतिरेकि, केवलान्वयि और केवल-व्यतिरेकि, हेतु तथा साध्य का साहचर्य अन्वय कहा जाता है और इस से उलटा याने साध्याभाव तथा हेत्वभाव का साहचर्य व्यतिरेक कहा जाता है, अन्वय

सपक्ष में रहता है और व्यतिरेक विपक्ष में। जहां हमें साध्य के होने का निश्चित ज्ञान है उसको सपक्ष कहते हैं जैसे रसोईघर। यहां रसोईघर में धूंआ रूप हेतु तथा अग्निरूप साध्य उनका साहचर्यरूप अन्वयव्याप्ति का ज्ञान होता है, जहां हमें साध्य के अभाव का निश्चित ज्ञान है उसको विपक्ष कहते हैं जैसे जलह्रद। यहां जलह्रद में साध्य अग्नि का अभाव अर्थात् अग्नि का न होना तथा हेतु धूंए का अभाव अर्थात् धूँआ न होना इन दोनों का साहचर्यरूप व्यतिरेक-व्याप्ति का ज्ञान होता है।

अन्वयव्यतिरेकि—ऊपर कहे हुए अन्वय तथा व्यतिरेक दोनों के दृष्टान्त जिसमें हों ऐसे लिंग को अन्वय-व्यतिरेकि कहते हैं जैसे "पर्वतो वह्निमान् धूमात्" इस उदाहरण में दिया हुआ धूंआ रूप हेतु-लिंग, जहां जहां धुआं हो वहां वहां अग्नि हो जैसे रसोईघर, यहां रसोईघर में हेतु धूआं और साध्य अग्नि इनका साहचर्य मिलता है इससे यह हुआ अन्वयदृष्टान्त, एवं जहां जहां अग्नि का अभाव हो वहां वहां धूंआ का अभाव हो, जैसे जलह्रद। यहां जलह्रद में साध्य अग्नि का अभाव तथा हेतु धूंए का अभाव इनका सहचर्य मिलता है इससे यह हुआ व्यतिरेक दृष्टान्त, इससे यहां कहा हुआ धुआं रूप लिंग अन्वयव्यतिरेक हुआ।

केवलान्वयि—ऊपर कहे हुए अन्वय और व्यतिरेक इन दोनों में से जहां केवल अन्वय का दृष्टन्त मिल सके और व्यतिरेक का दृष्टान्त न मिल सके ऐसे लिंग को केवलान्वयि कहते हैं। "घटः अभिधेयः प्रमेयत्वात्" यहां प्रमेयत्व हेतु केवलान्वयि है, क्योंकि जहां जहां प्रमेयत्व हो वहां वहां अभिधेयत्व जैसे पट, इस प्रकार, सपक्षमें स्थित अन्वयव्याप्ति का दृष्टान्त तो मिलता है किंतु जहां जहां साध्य-अभिधेयत्व का अभाव हो वहां वहां हेतु-प्रमेयत्व का अभाव हो ऐसी विपक्षस्थित व्यतिरेकव्याप्ति का दृष्टांत नहीं मिलता क्योंकि पदार्थ-मात्र अभिधेय ही है। इससे यहां कहा हुआ प्रमेयत्व हेतु केवलान्वयि हुआ।

केवलव्यतिरेकि—जहां केवल व्यतिरेक का दृष्टांत मिले और अन्वय का दृष्टांत न मिले ऐसे लिंग को केवलान्वयि कहते हैं, जैसे जीवत् शरीरं सात्मकं प्राणादिमत्वात्, इससे प्राणादिमत्व हेतु केवलव्यतिरेकि है क्योंकि यहां जो जो आत्मायुक्त नहीं होता वह वह प्राणादिमान भी नहीं होता जैसे घट,

इस प्रकार व्यतिरेकव्याप्ति का दृष्टांत मिलता है किंतु जो जो प्राणादिमान् हो वह वह आत्मायुक्त हो इस अन्वयव्याप्ति का कोई दृष्टांत नहीं मिलता, क्योंकि प्राणादिमान् मात्र का पक्ष में समावेश होने से कोई बाकी रहता ही नहीं जिसका हम सपक्षस्थित रूप में दृष्टांत दे सकें, इससे प्राणादिमत्व हेतु केवल-व्यतिरेकि हुआ।

यद्यपि सामान्यरूप से जहां साध्य का सन्देह हो उसको पक्ष कहा जाता है और साध्यसिद्धि पर्वत अग्निमान है ऐसा चाक्षुष निश्चय अनुमिति का प्रति-बंधक माना जाता है तथापि ऐसे स्थलपर यदि हमें अनुमिति की इच्छा हो तो अनुमिति हो सकती है एवं घर में रहे हुये पुरुष को अनुमिति की इच्छा न होते हुए भी मेघगर्जना सुनकर आकाश मेघयुक्त है ऐसी अनुमिति होती है। इससे ऐसा निश्चय होता है कि केवल साध्य का सन्देह अथवा केवल अनुमिति की इच्छा पक्ष नहीं हो सकती किन्तु अनुमिति की इच्छा से रहित साध्य की सिद्धि जहां न हो वह ही पक्ष हो सकता है। सारांश यह है कि जहां साध्य की सिद्धि न हो वहां सिषाधयिषा—अनुमिति की इच्छा–हो या न हो एवं जहां सिषाधयिषा–अनुमिति की इच्छा–हो वहां साध्य की सिद्धि हो या न हो तो भी पक्षता हो सकती है।

ऐसे सामान्य रूपसे कहा हुआ अनुमान तीन प्रकार का होता है—पूर्ववत्, शेषवत् और सामान्यतोदृष्ट।

**पूर्ववत्**—माने कारणवत् अर्थात् कारणद्वारा किया हुआ कार्यका अनु-मान पूर्ववत् कहा जाता है, जैसे बीज से फल का अनुमान। अथवा पूर्ववत् माने पूर्व की तरह, जैसे कि पहले हमने धूंआ और अग्नि का साहचर्य देखा है इससे उसके समान फिर यहां धूंआ देखकर अग्नि का निश्चय करते हैं यह अनुमान पूर्ववत् कहा जाता है। अथवा पूर्ववत् माने अन्वयव्याप्तिवाला अर्थात् केवलान्वयि अनुमान। **शेषवत्**–माने कार्यवत् अर्थात् कार्य द्वारा किया हुआ कारण का अनुमान शेषवत् कहा जाता है, जैसे गर्भ देखकर मैथुन का अनुमान, अथवा शेषवत् माने परिशेषानुमान जैसे शब्द गुण है तो किसी द्रव्य में रहना चाहिये किन्तु पृथिवी, जल, तेज, वायु, काल, दिशा, आत्मा और मन

इन आठ द्रव्यों में से किसी में भी पाया नहीं जाता अतः इन आठों के सिवाय किसी अन्य द्रव्य में अर्थात् आकाश में रहा हुआ होना चाहिये। यह अनुमान शेषवत् अर्थात् परिशेषानुमान हुआ। अथवा शेषवत् माने व्यतिरेक-व्याप्तिवाला अर्थात् केवलव्यतिरेकि अनुमान।

**सामान्यतोदृष्ट**--सामान्य लिंग से याने कार्यकारण से भिन्न अन्य किसी लिंग से जो अनुमान किया जाय वह सामान्यतोदृष्ट कहा जाता है। जैसे एक जगह देखी हुई किसी व्यक्ति को फिर जब हम दूसरी जगह देखते हैं तब उस व्यक्ति का एक जगह से दूसरी जगह पहुँचना गतिपूर्वक ही देखते हैं अर्थात् बिना गति एक जगह से दूसरी जगह पहुंचना नहीं बन सकता, वैसे सूर्य की गति यद्यपि हमें प्रत्यक्ष देखने में नहीं आती तथापि उसका एक जगह से दूसरी जगह पहुंचना विना गति हो नहीं सकता अतः उसकी भी अवश्य कोई गति होनी चाहिये ऐसा हम जो निश्चय करते हैं वह अनुमान सामान्यतो-दृष्ट कहा जाता है, अथवा सामान्यतोदृष्ट माने लिंग तथा लिंगी का सम्बन्ध, अप्रत्यक्ष होने पर जब केवल लिंग के सामान्य ज्ञान से लिंगी का अनुमान करना, यह अनुमान सामान्यतोदृष्ट कहा जाता है। जैसे इच्छादि लिंग के द्वारा अप्रत्यक्ष आत्मा का अनुमान। इच्छादि गुण हैं गुण द्रव्य में ही रहते हैं अतः इच्छादि यह गुण जिस द्रव्य में रहते हैं वह आत्मा है यह सामान्यतोदृष्ट अनुमान हुआ, अथवा सामान्यतोदृष्ट माने अन्वय तथा व्यतिरेक व्याप्तिवाला अर्थात् अन्वयव्यतिरेकि अनुमान।

यह अनुमान प्रमाण भूत, भविष्यत् और वर्तमान इन तीनों कालों में वर्तमान पदार्थों को विषय करता है, गर्भ-दर्शन से मैथुन का अनुमान भूत कालीन हुआ, बीजदर्शन से फल का अनुमान भविष्यत्कालीन हुआ, और धूमदर्शन से अग्नि का अनुमान वर्तमानकालीन हुआ।

उपर्युक्त अनुमाम स्वार्थानुमान तथा परार्थानुमान ऐसे दो प्रकार का होता है। इनमें अपने निश्चय के लिये जो होता है वह स्वार्थानुमान और परसंशय—विपर्यय या अव्युत्पत्तियुक्त—दूसरे पुरुष के निश्चय के लिये जो होता है वह परार्थानुमान कहा जाता है। स्वार्थानुमान तो व्याप्ति तथा

पक्षधर्मता के ज्ञानमात्र से हो सकता है, किसी पुरुष ने स्वयं अग्नि और धूंआ का अव्यभिचरित साहचर्य वारंवार देखकर जहां जहां धूंआ हो वहां वहां अग्नि हो ऐसी व्याप्ति जानली है फिर कभी वह पुरुष पर्वत के समीप पहुंच कर जब वहां धूंआ देखता है तब उसको पूर्वानुभूत व्याप्ति का स्मरण होता है और इससे यह पर्वत अग्नि के व्याप्य ऐसे धूंए वाला है अतः अग्नि वाला है ऐसा निश्चय होता है, यह स्वार्थानुमान कहा जाता है। परार्थानुमान न्यायरूप होता है। न्याय माने प्रतिज्ञा, हेतु, उदाहरण, उपनय, और निगमन रूप वाक्य के पांच अवयव। इनमें प्रतिज्ञा को छोडकर बाकी के चार अवयव स्थापना के अंग हैं क्योंकि इनके द्वारा ही प्रतिज्ञा की सिद्धि की जाती है।

**प्रतिज्ञा**—पक्षमें साध्य का कथन, जैसे नित्यः पुरुषः, पुरुष नित्य है।

**हेतु**—पक्षमें साध्य है ऐसा निश्चय करने का कारण, जैसे अकृतकत्वात्, पुरुष नित्य है क्योंकि वह उत्पन्न नहीं हुआ है। यहां उत्पन्न नहीं होना यह नित्यता की सिद्धि में हेतु रूप से कहागया है।

**उदाहरण**—दृष्टान्त का कथन जो साध्य को सिद्ध करे अर्थात् व्याप्ति का प्रतिपादक हो तथा जो मूर्ख, विद्वान् सभी के अनुभव में आसके उसका नाम दृष्टान्त, जैसे यथाकाशम् जैसे आकाश, यहां नित्यता की सिद्धि में आकाश दृष्टांत है।

**उपनय**—उदाहरण के बल पर साध्य को पक्ष में स्थापित करना जैसे यथा च अकृतमाकाशं तच नित्यं तथा पुरुषः जैसे अनुत्पन्न आकाश नित्य है वैसे अनुत्पन्न पुरुष भी नित्य होना चाहिये यह उपनय हुआ।

**निगमन**—प्रतिज्ञा, हेतु, उदाहरण और उपनय का जिसके द्वारा समर्थन कियाजाता है अर्थात् व्याप्ति विशिष्ट पक्षधर्म ( हेतु ) का कथन करके साध्य-विशिष्ट पक्ष ( प्रतिज्ञा ) का कथन निगमन कहाजाता है. जैसे तस्मात् नित्यः इति, इसलिये पुरुष नित्य है, यहां इसलिये यह हुआ हेतु का कथन तथा पुरुष नित्य है यह हुआ प्रतिज्ञा का कथन, प्रतिज्ञा से पक्षज्ञान, हेतु से लिंगज्ञान, उदाहरण से व्याप्तिज्ञान, उपनय से पक्षधर्मताज्ञान और निगमन से प्रतिज्ञा की सफलता में कोई बाधा नहीं है ऐसा ज्ञान होता है।

टिप्पणी—

चक्षुर्मात्रग्राह्योर्थो रूपम्, तच्च सप्तविधं—शुक्लं, नीलं, पीतं, रक्तं, हरितं, कपिशं, चित्रमिति। पृथिवीजलतेजोवृत्ति, पृथिव्यां सप्तविधं, भास्वरशुक्लं तेजसि, अभास्वरशुक्लं जले।

४. रसः—

**रसस्तु रसनग्राह्यो जलस्यैव गुणो मतः।**
**अव्यक्तो भूतसंसर्गात्स च षोढा विभिद्यते॥**

भाषा—

रस जिह्वा से ग्राह्य और जल का विशेष गुण है। अव्यक्त रस भूत संसर्ग से छः प्रकार से विभक्त होता है।

---

टिप्पणी—

रस्यते आस्वाद्यते इति रसः, रसनमात्रग्राह्योर्थो रसः, पृथिवीजलवृत्तिः, रसस्य योनिरापः क्षितिश्चाधारः, तदुक्तं—

"रसनार्थो रसस्तस्य द्रव्यमापः क्षितिस्तथा।
निर्वृत्तौ च विशेषे च प्रत्ययाः खादयस्त्रयः॥" (च० सू० १) इति

"स खलु आप्यो रसः अव्यक्तः, शेषभूतसंसर्गाद्विभक्तः षोढा विभज्यते, तद्यथा—मधुराम्लो लवणकटुकस्तिक्तः कषाय इति" ( सु० सू० ४२ ) तेषां षण्णां रसानां सोमगुणातिरेकात् ( भूम्यम्बुगुणबाहुल्यात् सु० ) मधुरो रसो, भूम्यग्निभूयिष्ठत्वादम्लः, तोयाग्निभूयिष्ठत्वाल्लवणः, वाय्वग्निभूयिष्ठत्वात्कटुकः, वाय्वाकाशातिरेकात्तिक्तः, पवनपृथिव्यतिरेकात्कषायः ( च० सू० २६ ) इति।

५. गन्धः—

**घ्राणग्राह्यो गुणो गन्धः क्षितेरेव गुणो मतः।**
**स चापि द्विविधो ज्ञेयः सौरभासौरभत्वतः॥**

भाषा—

घ्राणेन्द्रिय से ग्राह्य गुण को गन्ध कहते हैं, वह पृथ्वी का ही

विशेष गुण माना गया है। गन्ध, सुरभि और असुरभि, इस तरह दो प्रकार का होता है।

---

टिप्पणी—

घ्राणमात्रग्राह्योर्थो गन्धः, स च पृथिवीमात्रवृत्तिः, सुरभिरसुरभिरिति द्विविधः, तदुक्तं "सुरभिरसुरभिश्च गन्धः" इति रसवैशेषिकसूत्रे भदन्तनागार्जुनेन।

६. संख्या--

**एकत्वादिपरार्धान्ता संख्या च गणितं मतम्॥**

भाषा--

एक से परार्ध पर्यन्त गणना को संख्या कहते हैं, और इसी को गणित भी कहते हैं।

---

टिप्पणी—

एकत्वादिव्यवहारहेतुर्गुणः संख्या। सा च एकत्वादिपरार्धपर्यन्ता नवद्रव्यवृत्तिः चक्षुरिन्द्रियेण त्वगिन्द्रियेण च गृह्यते। उक्तं च "संख्या स्याद्गणितम्" (च०) गणितमिहैकद्वित्र्यादि (चक्र०) गणितं गणनव्यवहारहेतुरेकद्वित्र्यादि संख्या (यो०)

७. परिमाणम्—

**परिमाणं पुनर्मानं ह्रस्वं दीर्घं महदणु॥**

भाषा—

ह्रस्व, दीर्घ, महत्, अणु इत्यादि व्यवहार के असाधारण कारण को परिमाण कहा है।

---

टिप्पणी—

मानव्यवहारासाधारणं कारणं परिमाणम्। तच्चतुर्विधं—अणु, महत्, ह्रस्वं, दीर्घं च। उक्तं च परिमाणं पुनर्मानम् (च०) परिमितिव्यवहारकारणं परिमाणं–मानं प्रस्थाढकादि (यो०) मानं प्रस्थाढकादि तुलादिमेयम् (चक्र०) तुलाद्यैः पौतवं मानं द्रुवयं कुडवादिभिः। पाय्यं हस्तादिभिः (अ० चि०) इत्यादि द्रव्योपयोगिमानविशेषो द्रव्यगुणविज्ञाने द्रष्टव्यः॥

८. पृथक्त्वम्—

**पृथक्त्वं स्यादसंयोगो वैलक्षण्यमनेकता (च०) ॥**

भाषा—

यह इससे पृथक् है ऐसा ज्ञान जिस गुण से होता है उसको पृथक्त्व कहते हैं। वह तीन प्रकार का है असंयोग, वैलक्षण्य और अनेकता।

---

टिप्पणी—

इदं द्रव्यं पटलक्षणं घटात्पृथक् इत्यादिका बुद्धिर्यतो भवति तत्पृथक्त्वं भवति। तच्चाचार्यैस्त्रैविध्येनाह पृथक्त्वमित्यादि। तत्र यत्सर्वथाऽसंयुज्यमानयोरिव मेरुहिमाचलयोः पृथक्त्वम्, एतदसंयोग इत्यनेनोक्तम्। तथा संयुज्यमानानामपि पृथक्त्वं विजातीयानां महिषवराहादीनां, तदाह वैलक्षण्यमित्यादि। विशिष्टलक्षणयुक्तत्वलक्षितं विजातीयानां पृथक्त्वमित्यर्थः। तथैकजातीयानामप्यविलक्षणानां माषाणां पृथक्त्वं भवतीत्याह—अनेकतेति। एकजातीयेषु हि संयुक्तेषु न वैलक्षण्यं नाप्यसंयोगः, अथ चानेकता पृथक्त्वरूपा भवतीति भावः। किं वा पृथक्त्वं गुणान्तरमिच्छन् लोकव्यवहारार्थमसंयोगवैलक्षण्यानेकतारूपमेव यथोदाहृतं पृथक्त्वं दर्शयति (चक्र०) अयमस्मात्पृथक् इति व्यवहार (ज्ञान) हेतुः पृथक्त्वमित्यर्थः।

९. संयोगः—

**यस्तु द्रव्यैर्भवेद्योगः सह संयोग उच्यते।**
**द्रव्याणां द्वन्द्वसर्वैककर्मजोऽनित्य एव च ॥ (च०)**

भाषा—

द्रव्यों के पारस्परिक योग को संयोग कहते हैं। यह संयोग एक द्रव्य के कर्म से जायमान, अथवा, दो या सभी द्रव्यों के कर्म से जायमान, इस प्रकार तीन तरहका होता है और वह अनित्य होता है।

---

टिप्पणी—

संयोगमाह—योग इत्यादि। सहेति मिलितानां द्रव्याणां योगः प्राप्तिरित्यर्थः, सहेत्यनेनेहाकिञ्चित्करं परस्परसंयोगं निराकरोति। तद्भेदमाह—

द्वन्द्वेत्यादि । तत्र द्वन्द्वकर्मजो यथा युध्यमानयोर्मेषयोः, सर्वकर्मजो यथा—भाण्डे प्रक्षिप्यमाणानां माषाणां बहुमाषक्रियायोगजः, एककर्मजो यथा—वृक्षवायसयोः । अनित्य इति संयोगस्य कर्मजत्वेनानित्यत्वं दर्शयति । संयोगो द्विविधः—कर्मजः संयोगजश्च । आद्यो हस्तक्रियया हस्तपुस्तकसंयोगः । द्वितीयो हस्तपुस्तकसंयोगात्कायपुस्तकसंयोगः ( दी० ) द्रव्यगुणकर्महेतुः ( प्रशस्त० ) ।

१०. विभागः—

**विभागस्तु विभक्तिः स्याद्वियोगो भागशो ग्रहः ॥ (च.)**

भाषा—

द्रव्यों के पारस्परिक वियोग को विभाग कहते हैं । इसके द्वारा ही विभक्तरूप से ज्ञान होता है ।

---

टिप्पणी—

विभागमाह—विभागस्त्वित्यादि । विभक्तिर्विभजनम् । विभक्तिमेव विवृणोति—वियोग इति । संयोगस्य विगमो वियोगः । तत् किं संयोगाभाव एव वियोग इत्याह—भागशो ग्रह इति । विभागशो विभक्तत्वेन ग्रहणं यतो भवतीति भावः, तेन विभक्तिरित्येषा भावरूपा प्रतीतिः, न संयोगाभावमात्रं भवति, किं तर्हि भावरूपविभागगुणयुक्ता इत्यर्थः । संयोगविनाशको गुणो विभक्तप्रत्ययहेतुर्विभागः स चापि द्वन्द्वसर्वैककर्मजोऽनित्यश्च, विभागोपि द्विविधः-कर्मजो विभागजश्च । आद्यो हस्तक्रियया हस्तपुस्तकविभागः । द्वितीयो हस्तपुस्तकविभागात्कायपुस्तकविभागः । ( त० दी० )

११. १२. परत्वापरत्वे—

**परापरत्वे विज्ञेये देशकालकृते उभे ॥**

भाषा—

परत्व और अपरत्व, देशकृत और कालकृत इस प्रकार दो दो प्रकार के होते हैं ।

---

टिप्पणी-

परव्यवहारासाधारणं कारणं परत्वम्, अपरव्यवहारासाधारणं कारणमपरत्वम् । ते द्वे विधे-दिक्कृते, कालकृते च । दूरस्थे दिक्कृतं परत्वम् । समीपस्थे

दिक्कृतमपरत्वम् । ज्येष्ठे कालकृतं परत्वम् । कनिष्ठे कालकृतमपरत्वम् । ( त० सं० ) तत्र देशापेक्षया सन्निकृष्टदेशसम्बन्धिनमपेक्ष्य विदूरदेशसम्बन्धिनि परत्वं, सन्निकृष्टदेशसम्बन्धिनि चापरत्वं भवति । एवं सन्निकृष्टविप्रकृष्टकालापेक्षया च स्थविरे परत्वं यूनि चापरत्वं भवति ।

१३. गुरुत्वम्—

**यदाद्यपतने हेतुर्गुरुत्वं तदुदाहृतम् ॥**

भाषा—

पतन के प्रथम प्रवाह के कारण को गुरुत्व कहते हैं।

---

टिप्पणी—

पतनं नाम अधोदेशसंयोगानुकूलो व्यापारः । तच्च पतनं यथा—वृक्षात्पर्णं पततीत्यादौ वृक्षविभागजनकव्यापारमारभ्य भूमिसंयोगजनकव्यापारपर्यन्तं सर्वाः क्रियाः । तत्र प्राथमिकव्यापारो गुरुत्वजन्यः । द्वितीयादिस्तु वेगजन्य इति, (वाक्य.) गुरुत्वं जलभूम्योः पतनकर्मकारणं अप्रत्यक्षं पतनकर्मानुमेयं संयोगप्रयत्नसंस्कार ( वेग ) विरोधि ( प्रशस्त. ) केचित्त्वगिन्द्रियग्राह्यं गुरुत्वमाहुस्तेषामधःस्थितद्रव्यस्य स्पर्शोपलम्भप्रसङ्गः स्यात् । उपरिस्थितस्य गुरुत्वप्रतीतिस्तु हस्तादीनामधोगमनानुमानात् इति । गुरुत्वस्य संयोगादिभिस्त्रिभिर्विरोधः, तैः प्रतिबद्धस्य स्वकार्याकरणात्, तथाहि—दोलारूढस्य संयोगेन प्रतिबन्धादपतनम्, प्रयत्नेन प्रतिबधादपतनं शरीरस्य, वेगेन प्रतिबन्धादपतनं बहिः क्षिप्तस्य शरादेरिति । ( कन्दली )

१४. द्रवत्वम्—

**यदाद्यस्यन्दने हेतुर्द्रवत्वं तदपां गुणः ॥**

भाषा—

स्यन्दन के आद्य प्रवाह के कारण को द्रव कहते हैं। यह जल का विशेष गुण है।

टिप्पणी—

स्यन्दनं स्रवणम्। आद्यस्यन्दनासमवायिकारणम्। द्वितीयादिस्यन्दस्य वेगजन्यत्वात्। द्रवत्वं द्विविधं—सांसिद्धिकं, नैमित्तिकं च। तत्र सांसिद्धिकमग्न्यादिसंयोगाजन्यं स्वाभाविकमित्यर्थः। (वाक्य०) पृथिवीजलवृत्ति। सांसिद्धकमपां विशेषगुणः, नैमित्तिकं पृथिव्याः। त्रपुसीसलोहरजतसुवर्णसर्पिर्जतुमधूच्छिष्टादिपार्थिवद्रव्याणामग्निसंयोगाद्द्रवत्वम्।

२५. स्नेहः—

**स्नेहस्त्वपां गुणः प्रोक्तः स संग्रहमृजादिकृत्॥**

भाषा—

स्नेह जल का गुण है, वह संग्रह अर्थात् पिण्डीभाव और स्वच्छता आदि का हेतु माना गया है।

---

टिप्पणी—

स्नेहोऽपां विशेषगुणः, पिण्डीभावहेतुः संयोगविशेषः संग्रहः, मृजा परिशुद्धि, आदिपदेन मृदुत्वग्रहणम्। स्नेहो द्विविधः—प्रकृष्टस्नेहः, अपकृष्टस्नेहश्च। तत्र तैलादौ प्रतीयमानः प्रकृष्टस्नेहो दीपादिज्वालादेरनुकूलः। पानीयगतस्तु अपकृष्टस्नेहो वह्निं नाशयति (मुक्ता०) ननु भवतु स्नेहो गुणः स तु जले वर्तते इत्यत्र किं प्रमाणमिति चेन्न, सक्तुसिकतादौ जलेन संग्रहे तदनुमानात्, संग्रहो हि स्नेहद्रवकारितः संयोगविशेषः, स हि न द्रवत्वमात्राधीनः काचकाञ्चनद्रवत्वेन संग्रहानुपपत्तेः, नापि स्नेहमात्रकारितः स्त्यानैर्घृतादिभिः संग्रहानुपपत्तेः, तस्मादन्वयव्यतिरेकाभ्यां स्नेहद्रवत्वतः। स च जलेनापि सक्तुसिकतादौ दृश्यमानः स्नेहं जले द्रढयति। (उपस्कार०)

१६. बुद्धिः—

**व्यवहारमात्रहेतुर्ज्ञानं बुद्धिः प्रकीर्तिता।**
**सा चापि द्विविधा ज्ञेया ह्यनुभूतिः स्मृतिस्तथा॥**

भाषा—

प्रत्येक व्यवहार के कारणभूत ज्ञानको बुद्धिपद से कहते हैं। वह अनुभूति और स्मृति इस तरह दो प्रकार की है।

टिप्पणी—

सर्वव्यवहारहेतुर्ज्ञानं बुद्धिः, अनुव्यवसायगम्यं ज्ञानत्वमेव लक्षणम् (त० दी०) व्यवसायो विषयज्ञानं व्यवसायज्ञानमनुव्यवसायः, यथा—घटचाक्षुषप्रत्यक्षानन्तरं जायमानो घटं साक्षात्करोमीति अनुव्यवसायः, तेन च गम्यो घटसाक्षात्कारः सविकल्पज्ञानरूपो व्यवसायः । आत्माश्रयः प्रकाशो बुद्धिरिति शिवादित्यः। सांख्यास्तु प्रकृतेः प्रथमपरिणामं महदाख्यमन्तःकरणविशेषं बुद्धिं, बुद्धेर्विषयाकारं परिणामविशेषं घट-पटइत्यादिकं ज्ञानं, आदर्शरूपायां स्वच्छायां बुद्धौ वर्तमानेन ज्ञानेन चितिशक्तेः पुरुषस्य भेदाग्रहात्तद्वदभिमानमुपलब्धिमाचक्षते । न्यायवैशेषिकयोस्तु बुद्ध्युपलब्धिज्ञानानां न कश्चिद्भेदः, तदुक्तं—बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् ( न्या० सू० १-१-१५ ) बुद्धिरुपलब्धिर्ज्ञानं प्रत्यय इति पर्यायाः ( वै० सू० ८-१-१० ) इति । आयुर्वेदनये स्मृति, धृति, प्रज्ञा, अहङ्कार, चेतना इति पञ्चविधा बुद्धिरुक्ता,······चेतना धृतिः । बुद्धिः स्मृतिरहङ्कारः—(च० शा० १ ) इति । बुद्धिशब्देन तासामत्र ग्रहणम् । सा द्विविधा—अनुभूतिः—अनुभवः, स्मृतिः—स्मरणम् ।

स्मृतिः, अनुभवश्च—

**स्मृतिः संस्कारजं ज्ञानमनुभूतिरतोन्यथा ।**

भाषा—

संस्कारजन्य ज्ञान को स्मरण कहते हैं और स्मृति से भिन्न ज्ञान को अनुभव कहते हैं ।

टिप्पणी—

संस्कारमात्रजन्यं ज्ञानं स्मृतिः, संस्कारश्च अनुभवजन्यो भावनाख्यः, *प्रत्यभिज्ञायामतिव्याप्तिवारणाय मात्रपदम् । अतः अस्मात् अन्यथा विपरीतं स्मृतिभिन्नमित्यर्थः, ज्ञानमनुभूतिरनुभवः ।

* प्रत्यभिज्ञा—प्रतिगताऽभिज्ञा बुद्धिः—अतीतावस्थावच्छिन्नस्य वर्तमानभेदावगाहिप्रत्यक्षमित्यर्थः, यथा—स एवायं घटो यो मया पूर्वमुपलब्धः इत्या-कारिका पूर्वावस्थानुभवजनितसंस्कारसहकृतेन्द्रियप्रभवा प्रत्यभिज्ञा । सा च सविकल्पप्रत्यक्षेऽन्तर्भवति ।

**विभिद्यते च याथार्थ्यायाथार्थ्याभ्यामुभे अपि ॥**

भाषा--

स्मृति और अनुभव दोनों यथार्थ और अयथार्थ इस तरह प्रकार के होते हैं।

---

टिप्पणी—

अनुभूतिस्मृतिरूपे उभे ज्ञाने अपि यथार्थत्वायथार्थत्वाभ्यां विभिद्येते, अनुभवो द्विविधो यथार्थोऽयथार्थश्च, एवं स्मृतिरपि द्विविधा–यथार्थाऽयथार्था च, यथार्थानुभवः प्रमा, अप्रमा च अयथार्थानुभवः, प्रमाजन्या स्मृतिर्यथार्था, अप्रमाजन्या चायथार्था।

**शब्दानुमितिप्रत्यक्षैर्यथार्थानुभवस्त्रिधा।**
**द्विधाऽयथार्थानुभवो भ्रमसंशयभेदतः ॥**
**भ्रमो विपर्ययः प्रोक्तः संशयोर्थे ह्यनिश्चयः ॥**

भाषा—

यथार्थानुभव तीन प्रकार का है शब्द, अनुमिति और प्रत्यक्ष। तथा अयथार्थानुभव दो प्रकार का है भ्रम और संशय। विपरीत ज्ञानको भ्रम और अर्थ विषयक अनिश्चय को संशय कहते हैं।

---

टिप्पणी—

मिथ्याज्ञानापरर्यायोऽयथार्थनिश्चयो विपर्ययः। स एव भ्रमपदवाच्यः, यथा शुक्तौ इदं रजतमिति, समानधर्मोपपत्तेर्विशेषापेक्षो विमर्शः इति। स्थाणुपुरुषयोः समानधर्ममारोहपरिणाहौ पश्यन् पूर्वदृष्टं च तयोर्विशेषं बुभुत्समानः किंस्विदित्यन्यतरन्नावधारयति तदनवधारणं ज्ञानं [ विमर्शः ] संशयः, वस्तुस्वरूपानवधारणात्मकः प्रत्यय इत्यर्थः [ वात्स्या० ] चरकेप्युक्तं संशयो नाम सन्देहलक्षणानुसन्दिग्धेष्वर्थेष्वनिश्चयः यथा- दृष्टा ह्यायुष्मल्लक्षणैरुपेताश्चानुपेताश्च तथा सक्रियाश्चाक्रियाश्च पुरुषाः शीघ्रभङ्गाश्चिरजीविनश्च, एतदुभयदृष्टत्वात्संशयः, किमस्ति खल्वकालमृत्युरुत नास्तीति, [ च० वि० ८-४३] उत्कटैककोटिकः संशय ऊहः [स० प०] इत्युक्ता युक्तिस्तु संशयभेदः सा च

पृथङ्निरूपिता । प्रशस्तपादेन अनध्यवसायस्वप्नौ निरूपितौ–प्रसिद्धार्थेष्वप्रसिद्धार्थेषु व्यासंगादनर्थित्वाद्वा किमिदमित्यालोचनामात्रमनध्यवसायः। यथा–वाहीकस्य पनसादिष्वनध्यवसायो भवति। इदं हि नाना कोट्यनवलम्बनाभावान्न संशयः, विपरीतैककोटिनियमाभावान्न विपर्ययः, इति पृथगेव तदप्यप्रमैव, स च संशय एव। स्वप्नो मानसविपर्ययः, स्वप्नज्ञानं पुरीतद्बहिर्देशयोः सन्धौ मनसि स्थिते जन्यते, तच्च त्रिविधं किञ्चित्संस्कारपाटवात् [ चिन्ताविशेषात् ] किञ्चित् धातूनां वातपित्तश्लेष्मणां दोषात्, किञ्चित् धर्माधर्मरूपादृष्टविशेषाच्चोत्पद्यते। तच्च मानसविपर्ययरूपम्। आयुर्वेदनये तु

मनोवहानां पूर्णत्वाद्दोषैरतिबलैस्त्रिभिः।
स्रोतसां दारुणान्स्वप्नान्काले पश्यति दारुणे॥
नातिप्रसुप्तः पुरुषः सफलानफलांस्तथा।
इन्द्रियेशेन मनसा स्वप्नान्पश्यत्यनेकधा॥
दृष्टं श्रुतानुभूतं च प्रार्थितं कल्पितं तथा।
भाविकं दोषजं चैव स्वप्नं सप्तविधं विदुः॥
( च० इ० ५-४१-४३ ) इति स्वप्नहेतुप्रकारश्चोक्तः।

१७-१८. सुःखं दुःखम्–

**अनुग्रहस्वभावं तु सुखं दुःखमतोऽन्यथा॥**

**भाषा—**

**अनुकूल संवेदना के कारणको सुख और इसके विपरीत को दुःख कहते हैं।**

---

**टिप्पणी—**

अनुग्रहलक्षणं सुखम्। स्रगाद्यभिप्रेतविषयसान्निध्ये सति इष्टोपलब्धीन्द्रियार्थसन्निकर्षाद्धर्माद्यपेक्षादात्ममनसोः संयोगादनुग्रह ( सुखसंवेदन ) अभिष्वंग ( अनुराग ) नयनादिप्रसाद ( वैमल्य ) जनकमुत्पद्यते तत्सुखम्। अतीतेषु विषयेषु स्मृतिजम्। अनागतेषु सङ्कल्पजम्। यत्तु विदुषामसत्सु विषयानुस्मरणेच्छासङ्कल्पेषु आविर्भवति तद्विद्याशमसन्तोषधर्मविशेषनिमित्तमिति

[प्रशस्त०] धर्ममात्रासाधारणकारणगुणः (त० कौ०) सुख्यहमित्याद्यनुव्यवसाय-गम्यं सुखत्वादिकमेव लक्षणम् ( त० दी० ) इतरेच्छानधीनेच्छाविषयत्वमिति निष्कर्षः। सुखेच्छाधीने भोजनादावतिव्याप्तिवारणाय इतरेच्छानधीनेतीच्छा-विशेषम् ( न्या० बो० )।

उपघातलक्षणं दुःखम्। विषाद्यनभिप्रेतविषयसान्निध्ये सति अनिष्टोपलब्धी-न्द्रियार्थसन्निकर्षादधर्माद्यपेक्षादात्ममनसोः संयोगात् अमर्षोपघातदैन्य-निमित्तमुत्पद्यते तत् दुःखम्। अतीतेषु सर्पव्याघ्रचौरादिषु स्मृतिजम्। अनागतेषु सङ्कल्पजमिति ( प्रशस्त० ) अधर्ममात्रासाधारणकारणको गुणः। बाधनालक्षणं दुःखम् ( न्या० सू० १-१-२१ ] बाधना पीडा तदेव लक्षणं स्वरूपं यस्य तत् [ गौ० वृ० ] इतरद्वेषानधीनद्वेषविषयत्वम्। सर्पादावतिव्याप्तिवारणाय इतरद्वेषानधीनेति द्वेषविशेषणम् [ न्या० बो० ] दुःखी अहमित्यनुव्यवसाय-गम्यं दुःखत्वादिकमेव लक्षणम् [त० दी०]।

१६-२०-२१ इच्छा, द्वेषः, प्रयत्नः—

**इच्छाद्वेषौ कामक्रोधौ प्रयत्नस्तु कृतिस्तथा ॥**

भाषा—

काम और क्रोध को अनुक्रम से इच्छा और द्वेष कहते हैं, और कृति को प्रयत्न कहते हैं।

---

टिप्पणी—

इच्छा कामः ( त० सं० ) स्वार्थं परार्थं वाऽप्राप्तप्रार्थना इच्छा, सा च आत्ममनःसंयोगात्सुखाद्यपेक्षात् स्मृत्यपेक्षाद्वा उत्पद्यते ( प्रशस्त० ) सुखविषया तदुपायविषया वा, स्रक्चन्दनवनितादिविषयसेवनजन्मनः सुखात् उत्तरोत्तरं तज्जातीये सुखे, सुखसाधने वा राग इच्छा सञ्जायते ( उपस्कार० ) विषया-भ्यासजनितो दृढतरसंस्कारस्तन्मयत्वं तस्माच्च इच्छा प्रवर्तते। यथा—कामा-तुरस्य कामिनीमलभमानस्य सर्वत्र कामिनीदर्शनम्। अदृष्टविशेषात् यथा—तज्जन्माननुभूतकामिनीसुखस्यापि यौवनोद्भेदे कामिनीरागः। जातिविशेषाच्च इच्छाप्रादुर्भावः, यथा—मनुष्यजातीयानामन्नादौ, मृगजातीयानां तृणादौ,

करभजातीयानां कण्टकादाविति। इच्छा च प्रयत्नस्मृतिधर्माधर्मान् जनयति, कामः, अभिलाषः, रागः, संकल्पः, कारुण्यम्, वैराग्यम्, उपधा, भावः, इत्येवमादय इच्छाभेदाः,। मैथुनेच्छा कामः, अभ्यवहारेच्छाऽभिलाषः, पुनः पुनर्विषयानुरञ्जनेच्छा रागः, अनासन्नक्रियेच्छा सङ्कल्पः, स्वार्थमनपेक्ष्य परदुःख-प्रहाणेच्छा कारुण्यम्, दोषदर्शनाद्विषयत्यागेच्छा वैराग्यम्, परवञ्चनेच्छा उपधा, अन्तर्निगूढेच्छा भावः। चिकीर्षा जीहीर्षेत्यादिक्रियाभेदादिच्छाभेदा भवन्ति। ( प्रशस्त. )

क्रोधो द्वेषः, ( त० सं० ) प्रज्वलनात्मको द्वेषः, यस्मिन्सति प्रज्वलित-मिवात्मानं मन्यते स द्वेषः, स च आत्ममनसोः संयोगाद्दुःखापेक्षात्स्मृत्यपेक्षाद्वा उत्पद्यते ( प्रशस्त. ) दुःखविषयस्तत्साधनविषयो वा, अहिकण्टकादि-जन्मनो दुःखात्तत्र तत्साधने वा द्वेषः सञ्जायते, स च तन्मयत्वात् यथा—एकदा भुजङ्गदष्टस्य सर्वत्र भुजङ्गदर्शनम्। अदृष्टविशेषात् यथा—अननुभूतभुजङ्ग-दंशदुःखानामपि भुजङ्गद्वेषः। जातिविशेषात् यथा—महिषजातीयानां तुरङ्गमे द्वेषः, सारमेयाणां शृगाले, नकुलानां भुजङ्गमे इति ( उपस्कार. ) द्वेषोपि प्रयत्नस्मृतिधर्माधर्मान् जनयति। क्रोधः, द्रोहः, मन्युः, अक्षमा, अमर्षः इति द्वेषभेदाः। ( प्रशस्त. )

कृतिः प्रयत्नः ( त० सं० ) प्रयत्नः, संरम्भः, उत्साह इति पर्यायाः। स च द्विविधो जीवनपूर्वक इच्छाद्वेषपूर्वकश्च। तत्र जीवनपूर्वकः सुप्तस्य प्राणापान-सन्तानप्रेरकः प्रबोधकाले च अन्तःकरणस्य इन्द्रियान्तरप्राप्तिहेतुः, अस्य जीवनपूर्वकस्य आत्ममनःसंयोगाद्धर्माधर्मापेक्षादुत्पत्तिः, इतरस्तु हिताहित-प्राप्तिपरिहारसमर्थस्य व्यापारस्य हेतुः शरीरविधारकश्च। स च आत्ममनसोः संयोगादिच्छापेक्षाद् द्वेषापेक्षाद्वा उत्पद्यते ( प्रशस्त. ) स एव प्रकारान्तरेण प्रवृत्तिर्निवृत्तिर्जीवनयोनिरिति त्रिधोक्तः।

**२२·२३. धर्मः, अधर्मः—**

> **धर्मः स्वर्गसुखादीनां हेतुर्विहितकर्मजः।**
> **अधर्मो नरकादीनां हेतुर्निन्दितकर्मजः॥**

भाषा—

विहित कर्म से प्रसूत और स्वर्गादि सुखों के हेतु को धर्म, और निन्दित कर्मों से जन्य नरकादि दुःखों के कारण को अधर्म कहते हैं।

---

टिप्पणी—

धर्मः पुरुषगुणः, कर्तुः प्रिय ( सुख ) हित ( सुखसाधन ) मोक्षहेतुः अतीन्द्रियः, अन्त्यसुखसंविज्ञानविरोधी पुरुषान्तःकरणसंयोगविशुद्धाभिसन्धिजः, वर्णाश्रमिणां प्रतिनियतसाधननिमित्तः ( प्रशस्त. ) सुखासाधारणं कारणम् ( त० भा० ) स च विहितकर्मजन्यः अदृष्टविशेषः, धर्मस्तु न प्रत्यक्षः किन्तु अनुमानगम्यः, तच्चानुमानं—देवदत्तस्य शरीरादिकं देवदत्तस्य विशेषगुणजन्यं कार्यत्वे सति देवदत्तस्य भोगहेतुत्वात् देवदत्तप्रयत्नजन्यवस्तुवत्। यस्तु शरीरादिजनक आत्मविशेषगुणः स धर्मः, प्रयत्नादीनां शरीराद्यजनकत्वात् ( त० भा० ) धर्मः स्वर्गसुखतत्साधनीभूतशरीरादीनां हेतुः, विहितकर्मजन्यः, कर्मणां चिरविनष्टतया स्वर्गादिजनकत्वं न स्यात् , तदुक्तमुदयनाचार्यैः, चिरध्वंसां फलायालं न कर्मातिशयं विना। इति, तस्मात् फललाभाय कर्मणां व्यापारः कल्पनीयः स च धर्मः।

अधर्मोप्यात्मगुणः कर्तुरहित ( दुःखसाधन ) प्रत्यवाय ( दुःख ) हेतुरतीन्द्रियोऽन्त्यदुःखसंविज्ञानविरोधी, तस्य तु साधनानि शास्त्रे प्रतिषिद्धानि धर्मसाधनविपरीतानि हिंसाऽनृतस्तेयादीनि, विहिताकरणं प्रमादश्च, दुष्टाभिसंधिं चापेक्ष्य आत्ममनसोः संयोगाद्धर्मस्योत्पत्तिः [ प्रशस्त, ] दुःखासाधारणकारणम् [ प्र० प्र० ] निषिद्धकर्मजन्यः, स चाप्यनुमानगम्यः, अधर्मो नरकरोगप्रभृतीनां हेतुः।

२४. संस्कारः—

**संस्कारस्तु त्रिधा वेगस्थितिस्थापकभावनाः॥**

भाषा—

वेग, स्थितिस्थापक और भावना नाम के तीन संस्कार माने जाते हैं।

टिप्पणी—

यज्जातीयारम्भमुत्पाद्यस्तज्जातीयस्य कारणम् ।
स्वयं यस्तद्विजातीयः संस्कारः स गुणो मतः ॥ ( ता० र० )

स्वोत्पादकसजातीयस्योत्पादकः स्वयं च तद्विजातीयो गुणः संस्कार इति । यथा—स्मृतिहेतुः संस्कारः । संस्कारस्त्रिविधो वेगो भावना स्थितिस्थापकश्च, वेगः पृथिव्यप्तेजोवायुमनोवृत्तिः, भावनासंज्ञकस्त्वात्मगुणो दृष्टश्रुतानुभूतेषु अर्थेषु स्मृतिप्रत्यभिज्ञाहेतुः । ( प्रशस्त० ) अन्यथाकृतस्य पुनस्तदवस्थापादकः स्थितिस्थापकः, कटादिपृथिवीवृत्तिः । कर्मजः संस्कारो वेगः । ज्ञानजः संस्कारो भावना । स्थित्यापादको गुणः संस्कारः स्थितिस्थापकः (स० प०) द्रव्यगुणविज्ञाने तु संस्कारशब्दो गुणान्तराधानवाची संस्कारः करणं मतम् ( च० सू० २६ ) इत्युक्तः ।

२५. २६. २७. सत्वं, रजः, तमः —

**सत्वं रजस्तमश्चेति त्रयः प्रोक्ता महागुणाः ॥**

भाषा—

सत्व, रज, और तम को महागुण माना है ।

---

टिप्पणी—

सत्वं रजस्तमश्च तन्त्रे व्यवहारार्थं महागुणशब्देनोक्ताः ( इन्दु० )

प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ।
अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥
सत्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः ।
गुरुवरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥ (सां० का०)

॥ इति गुणनिरूपणम् ॥

गुण किसी आधार पर ही रहता है निराधार नहीं रह सकता। इसका आधार है द्रव्य और गुण है आधेय, इन दोनों का समवाय सम्बन्ध होने से गुण को समवायाधेय और द्रव्य को समवायाधार कहते हैं। कर्म भी तो द्रव्याश्रित होता है। उसकी व्यावृत्ति के लिये गुणको निश्चेष्ट कहा है अर्थात् गुण, कर्म से रहित तथा कर्म से भिन्न होता है वह अपने समान गुण की उत्पत्ति में कारण होता है, द्रव्य में गुण रहता है किन्तु गुण में कोई गुण नहीं रहता अर्थात् गुण, द्रव्याश्रित निष्कर्म और निर्गुण होता है।

शब्द, स्पर्श, रूप, रस, गन्ध, गुरु, लघु, शीत, उष्ण, स्निग्ध, रूक्ष, मन्द, तीक्ष्ण, स्थिर, सर, मृदु, कठिन, विशद, पिच्छिल, श्लक्ष्ण, खर, स्थूल, सूक्ष्म, सान्द्र, द्रव, बुद्धि, इच्छा, द्वेष, सुख, दुःख, प्रयत्न, परत्व, अपरत्व, युक्ति, संख्या, संयोग, विभाग पृथक्त्व, परिमाण, संस्कार, अभ्यास, मनोविषय ( चिन्त्य विचार्य आदि ) सत्व, रज, तम, धर्म, अधर्म, कुल ४७ गुण हैं। इनमें पदार्थविज्ञान में उपयोगी गुणों का निरूपण किया जायगा। द्रव्यगुण विज्ञान में उपयोगी गुणों का निरूपण द्रव्यगुण विज्ञान के ग्रन्थों में देखना चाहिये।

१. शब्द—

केवल श्रोत्रेन्द्रिय द्वारा जिसका ग्रहण हो ऐसे गुण का नाम शब्द है। यह आकाश का विशेष गुण है और केवल बाह्य एक इन्द्रिय से ग्राह्य है आकाशादि पञ्चीकृत पांचों महाभूतों में पाया जाता है। इसके दो भेद हैं ध्वनिरूप और वर्णरूप। ढोल, मृदंग इत्यादि का शब्द ध्वनिरूप है और संस्कृत आदि भाषा का शब्द वर्णरूप है। शब्द संयोग, विभाग या शब्द से उत्पन्न होता है और क्षणिक है।

**संयोगजन्य**—ढोल में डंडी के संयोग से होने वाला।

**विभागजन्य**—बांस को चीरने से दोनों टुकड़ों के अलग होने से उत्पद्यमान शब्द।

**शब्दजन्य शब्द**—जलतरंगन्यायसे या कदंबमुकुलन्याय से शब्द से उत्पन्न होने वाला शब्द।

२. स्पर्श—

केवल त्वचा इन्द्रिय द्वारा जिसका ग्रहण हो ऐसे गुण का नाम स्पर्श है। यह शीत, उष्ण, समशीतोष्ण, कठिन इत्यादि भेदवाला है और जल, तेज, वायु और पृथ्वी में रहता है। इनमें शीत जलमें, उष्ण तेज में, समशीतोष्ण पृथ्वी तथा वायु में और कठिन--खर पृथ्वी में रहता है।

३. रूप—

केवल चक्षुइन्द्रिय द्वारा जिसका ग्रहण हो ऐसे गुण का नाम रूप है। शुक्ल (उजला) नील (काला) पीत, (पीला) रक्त, (लाल) हरित (हरा) कपिश (भूरा) और चित्र (चितकबरा) ऐसे सात प्रकार का होता है। यह पृथ्वी, जल, और तेजमें रहता है। इनमें पृथ्वी में सातों प्रकार का, तेजमें चमकीला उजला और जल में चमक रहित उजला रहता है।

४ रस—

केवल रसनेन्द्रियद्वारा जिसका ग्रहण हो ऐसे गुण का नाम रस है। यह जल और पृथ्वी में पाया जाता है। इनमें भी जल इसका मुख्य आधार कारण [योनि] है और पृथ्वी गौण [आधार] कारण है, इसकी अभिव्यक्ति और विशेष [भेद] में आकाश, वायु, और तेज निमित्त कारण हैं, जलीय रस अव्यक्त होता है। वह शेष-जलसे भिन्न चारों भूतों के संसर्ग से छः प्रकारका होता है जैसे मधुर, अम्ल, लवण, कटुक, तिक्त और कषाय। इनमें सोम [जल और पृथिवी] के गुण की अधिकता से मधुर, पृथ्वी और अग्नि के गुणों की अधिकता से अम्ल, जल और अग्नि के गुणों की अधिकता से लवण, वायु और अग्नि के गुणों की अधिकता से कटुक, वायु और आकाश के गुणों की अधिकता से तिक्त तथा वायु और पृथ्वी के गुणों की अधिकता से कषाय रस उत्पन्न होता है।

५. गन्ध--

केवल घ्राणेन्द्रिय द्वारा जिसका ग्रहण हो ऐसे गुण का नाम गन्ध है। यह केवल पृथ्वी में रहता है। इसके दो भेद हैं— सुगन्ध, दुर्गन्ध।

६ संख्या—

एक, दो इत्यादि शब्दों का व्यवहार [ ज्ञान ] जिसके द्वारा हो ऐसे गुण का नाम संख्या है। ऐसे परार्ध पर्यन्त संख्या मानी गई है। यह सब द्रव्यों में पाई जाती है और इसका ज्ञान चक्षु और त्वचा द्वारा होता है।

७. परिमाण—

मापके व्यवहार का असाधारण कारणरूप जो गुण उसका नाम परिमाण है। इसके चार भेद हैं—ह्रस्व, दीर्घ, अणु, महत्। ह्रस्व माने छोटा, दीर्घ माने बड़ा, अणु माने वजन में हलका और महत् माने वजन में भारी। द्रव्य-गुण विज्ञान में उपयोगी माप तीन प्रकार का है—पौतव, द्रुवय और पाय्य, तुला से अर्थात् तराजू [ बटखरे ] से किया जानेवाला माप पौतव, पात्र से किया जानेवाला द्रुवय, और हाथ-फूट पट्टी-से किया जानेवाला पाय्य कहा जाता है।

८. पृथक्त्व—

यह घट, पट से भिन्न है इस प्रकार का ज्ञान जिससे होता है उस गुणका नाम पृथक्त्व है। यह पृथक्त्व आचार्यों ने तीन प्रकार का माना है—असंयोग, वैलक्षण्य और अनेकता। मेरु और हिमाचल का पृथक्त्व असंयोगरूप है, उनका कभी संयोग नहीं है। भैंस, सूअर आदि का पृथक्त्व वैलक्षण्यरूप है उनमें विलक्षणता पायी जाती है। अनेक उर्दों का पृथक्त्व अनेकतारूप है। सजातीय होने पर भी उर्द एक दूसरे से पृथक् हैं।

९. संयोग—

दो या अधिक पदार्थ संयुक्त हैं इस प्रकार का ज्ञान जिससे होता है उस गुण का नाम संयोग है। संयोग दो या अधिक द्रव्यों का होता है। इसके तीन भेद हैं—द्वन्द्वकर्मज, सर्वकर्मज, और एककर्मज।

द्वन्द्वकर्मज—दोकी चेष्टा से होनेवाला संयोग, जैसे लड़ते हुए दो भेड़ों का संयोग।

सर्वकर्मज—अनेकों की चेष्टा से होनेवाला संयोग, जैसे पात्र में डालेजाते उर्दों का संयोग।

एककर्मज—एककी चेष्टा से होनेवाला संयोग, जैसे वृक्ष और कौएका संयोग।

तार्किक लोगों का कथन है कि संयोग दो प्रकार से उत्पन्न होता है कर्मज और संयोगज। हस्तक्रिया से हस्त और पुस्तक का संयोग होता है। यह कर्मज है और हस्त और पुस्तक के संयोग से शरीर और पुस्तक का संयोग होता है यह संयोगज है। संयोग अनित्य है, इसका विभाग से नाश होता है।

## १०. विभाग—

ये दो या अधिक पदार्थ विभक्त हैं ऐसा ज्ञान जिससे होता है उस गुण का नाम विभाग है। यह विभाग संयोग के अभावरूप नहीं है किन्तु भावरूप है अर्थात् संयोग विनाशक विभक्तज्ञानहेतु गुण विभाग है। यह भी संयोग के समान द्वंद्वकर्मज, सर्वकर्मज और एककर्मज ऐसे तीन प्रकार का होता है। तार्किक लोगों ने विभाग का भी दो प्रकार से उत्पन्न होना माना है जैसे कर्मज और विभागज। हस्तक्रिया से हस्तपुस्तकविभाग-वियोग-होता है यह कर्मज है और हस्तपुस्तक के विभाग से शरीर और पुस्तक का विभाग होता है यह विभागज है।

## ११. १२. परत्व, अपरत्व—

यह पर है, यह अपर है इस प्रकार का व्यवहार जिससे हो उस गुण का नाम अनुक्रम से परत्व और अपरत्व है।

यह परत्व, अपरत्व दो प्रकार का होता है। दिक्कृत और कालकृत। दिक्कृत परत्व—दूरता है, दिक्कृत अपरत्व—समीपता है। कालकृत परत्व—बड़प्पन है, कालकृत अपरत्व—छोटापन है। दूरस्थित पदार्थ में दिक्कृत परत्व और समीपस्थित पदार्थ में दिक्कृत अपरत्व होता है। ज्येष्ठ में कालकृत परत्व और कनिष्ठ में कालकृत अपरत्व होता है।

१३. गुरुत्व—

आद्यपतन के असाधारण कारणरूप गुण का नाम गुरुत्व है। वृक्ष से पत्ता गिरता है यहां वृक्ष और पत्ते का विभाग करने वाले व्यापार को लेकर भूमि के संयोग करने वाले व्यापार तक की सब क्रियाएं पतनशब्द वाच्य हैं उनमें प्राथमिक व्यापार गुरुत्व से होता है और द्वितीय आदि तो वेगजन्य है। यह गुरुत्व पृथ्वी और जल में रहता है। यह अप्रत्यक्ष है, केवल पतनकर्म से इसका अनुमान किया जाता है। गुरुत्व, संयोग, प्रयत्न और संस्कार (वेग) का विरोधी है जैसे कि दोला पर बैठे हुए पुरुष का पतन नहीं होता क्योंकि उसके गुरुत्व का संयोग से प्रतिबन्ध हुआ होता है। चलते फिरते आदमी का पतन नहीं होता क्योंकि उसके गुरुत्व का प्रयत्न से प्रतिबन्ध हुआ होता है, वैसे फेंके हुए बाण का पतन नहीं होता क्योंकि उसके गुरुत्व का वेग से प्रतिबन्ध हुआ होता है। कोई कोई त्वचा इन्द्रिय द्वारा गुरुत्व का प्रत्यक्ष मानते हैं, यदि ऐसा होता तो नीचे पड़े हुए गुरु द्रव्य को ऊपर के भाग में स्पर्श करने से भी उसके गुरुत्व का प्रत्यक्ष होना चाहिए किन्तु वैसा होता नहीं है। हाथ से ऊपर उठाये हुए पदार्थ के गुरुत्व का जो ज्ञान होता है वह स्पर्शजन्य नहीं है किन्तु हाथ के ऊपर दबाव पड़ने से गुरुत्व का अनुमान होता है।

१४. द्रवत्व—

आद्यस्यन्दन—स्रवण—के असाधारण कारणरूप गुण का नाम द्रवत्व है।

द्रवत्व दो प्रकार का होता है सांसिद्धिक और नैमित्तिक। सांसिद्धिक द्रवत्व स्वाभाविक होता है, और नैमित्तिक अग्नि के संयोगरूप निमित्त विशेष से होता है। यह पृथ्वी और जल में पाया जाता है। इसमें सांसिद्धिकद्रवत्व जल का विशेष गुण है और नैमित्तिकद्रवत्व पृथ्वी का। रांगा, सिक्का, लोहा, चांदी, सुवर्ण, घृत, मोम इत्यादि पार्थिव द्रव्यों का अग्निसंयोग से द्रवत्व होता है।

१५. स्नेह—

जिससे संग्रह—पिण्डीभाव—परिशुद्धि और मृदुत्व हो उस गुण का नाम स्नेह है।

सत्तू, मिट्टी इत्यादि चूर्ण का जिसके द्वारा गोला बनाया जाय, पदार्थों की परिशुद्धि और मृदुत्व किया जाय उसे स्नेह कहते हैं। स्नेह जल का विशेष गुण है। यह स्नेह दो प्रकार का होता है प्रकृष्ट और अपकृष्ट। तेल वगैरह में प्रकृष्ट स्नेह होता है, वह दीपज्वाला के अनुकूल होता है और खुद जल में अपकृष्ट स्नेह होता है जो अग्नि को बुझा देता है।

सत्तू मिट्टी आदिका जल द्वारा पिण्डीभाव होता है इससे स्नेह नाम का गुण जलमें है ऐसा अनुमान होता है और काच सुवर्ण इत्यादि के द्रवसे पिण्डीभाव नहीं होता, इससे द्रवत्व को पिण्डीभाव का कारण नहीं मान सकते और जमेहुए घृतादिसे भी पिण्डीभाव नहीं होता अतः केवल स्नेह को भी पिण्डीभाव का हेतु नहीं मान सकते किन्तु पिण्डीभाव स्नेहसहकृत द्रव ही से होता है। जलसे सत्तू मिट्टी इत्यादि का पिण्डीभाव देखा जाता है इससे जल में भी स्नेह है ऐसा निश्चय होता है।

१६. बुद्धि—

ज्ञानके विना शब्दप्रयोग नहीं हो सकता अतः सर्वव्यवहारशब्द प्रयोग का हेतु ज्ञान है। ज्ञान को ही बुद्धि कहते हैं।

अनुव्यवसायगम्य ज्ञान बुद्धि है ऐसा दीपिकाकारने कहा है। विषयका ज्ञान व्यवसाय है और व्यवसाय का ज्ञान अनुव्यवसाय है। जैसे यह घट है ऐसा घट का चाक्षुषप्रत्यक्ष व्यवसाय कहा जाता है और उसके अनन्तर मुझे घट का प्रत्यक्ष ज्ञान हो रहा है ऐसा जो ज्ञान होता है उसको अनुव्यवसाय कहते हैं। शिवादित्यने कहा है कि आत्मा का आश्रय करके रहा हुआ जो प्रकाश उसका नाम बुद्धि है। सांख्यवाले प्रकृति के प्रथम परिणाम महत्तत्व रूप अन्तःकरण विशेष को बुद्धि कहते हैं और निर्मल बुद्धि के विशेष परिणाम को ज्ञान कहते हैं अर्थात् बाह्येन्द्रिय द्वारा विषयदेश में पहुँचकर घट, पट, आदि विषयरूपमें परिणत हुई बुद्धि को ज्ञान कहते हैं और स्वच्छ बुद्धिमें रहे हुए ज्ञान से चैतन्य रूप पुरुष के भेदका ज्ञान न होने से 'मैं जानताहूँ" इस प्रकार का जो अभिमान होता है उसको उपलब्धि कहते है किन्तु न्याय

वैशेषिक वाले तो बुद्धि, उपलब्धि और ज्ञानको पर्यायरूप मानते है। आयुर्वेद में स्मृति, धृति, प्रज्ञा, अहंकार और चेतना ऐसे पांच प्रकार की बुद्धि कही है।

बुद्धि दो प्रकार की है—अनुभव और स्मृति, केवल संस्कार से उत्पन्न हुए ज्ञान को स्मृति कहते हैं, अनुभवजन्य भावना को संस्कार कहते हैं। प्रत्यभिज्ञा भी तो संस्कार से होती है अतः स्मृति के लक्षण की प्रत्यभिज्ञामें अतिव्याप्ति न हो इसलिये केवल संस्कारजन्य कहा है। प्रत्यभिज्ञा केवल संस्कार से नहीं होती किन्तु संस्कार और प्रत्यक्ष इन दोनों से होती है और स्मृति केवल संस्कार से होती है।

अनुभव और स्मृति ये दोनों दो दो प्रकार के होते हैं। यथार्थ और अयथार्थ। यथार्थ अनुभव को प्रमा और अयथार्थ अनुभव को अप्रमा कहते हैं। प्रमाजन्य स्मृति यथार्थ होती है, अप्रमाजन्य स्मृति अयथार्थ होती है।

मिथ्याज्ञानरूप अयथार्थ निश्चय को विपर्यय कहते हैं, इसी को भ्रम भी कहते है, जैसे सीपमें रजतत्व का ज्ञान होना विपर्यय है।

समान धर्म की उपपत्ति से विशेष की अपेक्षा रखनेवाले अनिश्चय को संशय कहते हैं। जैसे स्थाणु और पुरुष इन दोनों का समान धर्म ऊंचाई और मोटाई देखकर मनुष्य पहले देखे हुए उन दोनों के विशेष को जानने की इच्छा रखते हुए भी किसी एकका निश्चय नहीं कर सकता है, इस अनिश्चित ज्ञानका नाम संशय है, चरक संहिता में कहा है सन्देह उत्पन्न करनेवाले लक्षणों से युक्त पदार्थों में निश्चय न होना यह संशय है। जैसे दीर्घआयु के लक्षणों से युक्त पुरुष अच्छी तरह चिकित्सा करने पर भी अकालमें मृत्यु पाते देखे जाते हैं, वैसे दीर्घ आयुके लक्षणों से रहित और चिकित्सा विहीन पुरुष भी दीर्घकाल तक जीते देखे जाते हैं। इस प्रकार इन दोनों को देखकर संशय होता है कि अकालमृत्यु है या नहीं।

संशय का एक भेद ऊह है। संशयमें दोनों कोटियां समान होती हैं और ऊह में एक कोटि को प्रबल मानकर संभावना की जाती है, जैसे मानो न मानो यह स्थाणु ही है, इतनी देर तक पुरुष एक स्थिति में नहीं रहता। इसको

आयुर्वेद में युक्ति कहा है जिसका निरूपण पहले हो चुका है। प्रशस्तपादने अनध्यवसाय और स्वप्न ऐसे अप्रमा के दो और भेद कहे हैं।

प्रसिद्ध पदार्थों में या अप्रसिद्धपदार्थों में चित्त के कहीं दूसरी वस्तु में व्यापृत होनेसे अथवा विशेष निश्चय का अभाव होनेसे यह कुछ है ऐसे आलोचना-मात्र ज्ञान को अनध्यवसाय कहते हैं। जैसे अपरिचित वृक्ष को देखने पर इतना ज्ञान होता है कि यह कोई वृक्ष है किन्तु कौन वृक्ष है ऐसा ज्ञान नहीं होता। यह विशेष प्रतीतिरहित ज्ञान अनध्यवसाय कहा जाता है। अनध्यवसाय ज्ञानमें दो विरुद्ध कोटि के न होने से इसको संशय नहीं कह सकते और विपरीत एक कोटिका निश्चय नहीं होने से इसको विपर्यय भी नहीं कह सकते, अतः अनध्यवसाय संशय का एक स्वतन्त्र भेद है और यह अप्रमा है।

स्वप्नज्ञान मानस विपर्यय है। जब पुरीतत् नाम की नाड़ी और बाह्य प्रदेश की सन्धि में मन रहता है तब स्वप्न होता है। स्वप्न तीन कारणों से होता है—दृढ़ भावना से, वातादि धातुओं के दोष से और अदृष्टविशेष से।

आयुर्वेद में कहा है कि मनोवह स्रोत जब प्रकुपित तीनों दोषों से पूर्ण हो जाते हैं तब दारुण समय में मनुष्य दारुण स्वप्न को देखता है, पूर्ण निद्रित न हुआ पुरुष इन्द्रियाधिपति मनद्वारा अनेक प्रकार के सफल या निष्फल स्वप्न देखता है। स्वप्न सात प्रकार का होता है, पहिले देखा हुआ, सुना हुआ अनुभव किया हुआ, इच्छित, कल्पित, भाविक और दोषजन्य।

### १७. सुख—

प्रसन्नता ही सुख का लक्षण है, धर्मादि द्वारा विषय में इष्टता-ज्ञान एवं इन्द्रिय और इष्ट विषय का सन्निकर्ष होने पर आत्मा और मन के संयोग से सुखानुभव, अनुराग और नेत्र मुख की विमलता को उत्पन्न करनेवाले गुण का नाम सुख है।

भूतकालीन विषय के स्मरण से और भविष्यकालीन विषय के संकल्प से सुख होता है। ज्ञानी पुरुष को तो विषय स्मरण इच्छा और संकल्प के न होते

हुए भी ज्ञान, शम, संतोष और धर्मविशेष–जनित सुख होता है। मैं सुखी हूं, इस प्रकार के अनुव्यवसाय से जिसका ज्ञान होता है वह व्यवसायात्मक ज्ञान ही सुख है। जो इच्छा दूसरी इच्छा के अधीन न हो ऐसी इच्छा के विषय को ही सुख कहते हैं। हम सुख के लिए भोजन करते हैं, यह भोजन की इच्छा इतर (सुख) इच्छा के अधीन है अतः इसको सुख नहीं कह सकते।

१८. दुःख—

विषण्णता ही दुःख का लक्षण है। अधर्मादि द्वारा विषय में अनिष्टता-ज्ञान एवं इन्द्रिय और अनिष्ट विषय का सन्निकर्ष होने पर आत्मा और मन के संयोग से असहिष्णुता, दुःखानुभव, और दीनता को उत्पन्न करनेवाले गुण का नाम दुःख है। भूतकालीन विषय के स्मरण से और भविष्यकालीन विषय के संकल्प से दुःख होता है। मैं दुःखी हूं इस प्रकार के अनुव्यवसाय से जिसका ज्ञान होता है वह व्यवसायात्मक ज्ञान ही दुःख है। हमें सर्प से दुःख होता है इसलिए हम सर्प से द्वेष करते हैं। यहां सर्प का द्वेष इतर (दुःख) द्वेष के अधीन है अतः जो द्वेष दूसरे द्वेष के अधीन न हो ऐसे द्वेष के विषय को ही दुःख कहते हैं।

१९. इच्छा—

किसी भी वस्तु की कामना को इच्छा कहते हैं। अपने लिए अथवा दूसरे के लिए न प्राप्त हुई वस्तु की प्राप्ति की भावना इच्छा है। सुख अथवा सुख की स्मृति द्वारा आत्मा और मन के संयोग से इच्छा उत्पन्न होती है, पुष्पमाला, चन्दन, वनिता इत्यादि विषयों के सेवन से उत्पन्न हुए सुख से उत्तरोत्तर उसके सजातीय सुखमें या सुख के साधन में राग अर्थात् इच्छा उत्पन्न होती है विषय के निरन्तर सम्बन्ध से उत्पन्न जो दृढतर संस्कार इसी को तन्मयता कहते हैं। इस तन्मयता से इच्छा होती है। जैसे कामातुर पुरुष जब कामिनी को प्राप्त नहीं करता है तब उसको सर्वत्र कामिनीदर्शन होता है। अदृष्टविशेष से भी इच्छा होती है। जैसे—इस जन्म में कामिनीसुख का जिसने अनुभव नहीं किया है ऐसे आदमी को भी यौवन अवस्था प्राप्त होते ही कामिनी में राग होता है, जातिविशेष से भी इच्छा होती है, जैसे मनुष्य को

अन्न में, पशुओं को तृण में और ऊंट को कंटक में इच्छा होती है। इच्छा से प्रयत्न, स्मृति, धर्म और अधर्म उत्पन्न होते हैं।

मैथुनेच्छा को काम, भोजनेच्छा को अभिलाष, पुनः पुनः विषयासक्तिको राग, भविष्य में होनेवाली क्रिया करने की इच्छा को सङ्कल्प, बिना स्वार्थ परदुःखनिवारण की इच्छा को कारुण्य, दोषदर्शन से विषय के त्याग की इच्छा को वैराग्य, दूसरे को ठगने की इच्छा को उपधा, गुप्तइच्छाको भाव कहते हैं। वैसे चिकीर्षा, जिहीर्षा इत्यादि क्रिया के भेद से इच्छा के अनेक भेद हो सकते हैं।

२०. द्वेष—

क्रोध को द्वेष कहते हैं। यह ज्वलनरूप है अर्थात् जब द्वेष होता है तब आदमी अपने को जलता हुआ-सा मानता है, दुःख अथवा दुःख की स्मृति द्वारा आत्मा और मनके संयोग से द्वेष उत्पन्न होता है। यह दुःखमें या दुःखके साधन में होता है, जैसे सर्प, कण्टक इत्यादि से उत्पन्न दुःखमें और उस दुःख के साधन सर्पकण्टक इत्यादि में द्वेष होता है। दुःख और दुःख की स्मृति द्वारा आत्मा और मनके संयोग से होता है, यह भी तन्मयता, अदृष्टविशेष और जातिविशेष से उत्पन्न होता है।

तन्मयता से जैसे—एक दफा सर्पदंश जिसको हुआ है उसको सर्वत्र सर्प का दिखाई देना।

अदृष्टविशेषसे जैसे—सर्पदंशके दुःखका जिसको अनुभव नहीं हुआ है ऐसे पुरुष को भी सर्प का द्वेष होना।

जातिविशेष से जैसे—भैंस का घोड़े में, कुत्ते का गीदड़ में, नोउले का सर्प में द्वेष का होना इत्यादि।

द्वेषसे भी प्रयत्न, स्मृति, धर्म और अधर्म होते हैं। क्रोध, द्रोह, मन्यु, अक्षमा, अमर्ष ये सब द्वेष के भेद हैं।

२१. प्रयत्न—

कार्यारंभक गुणविशेष का नाम प्रयत्न है। प्रयत्न, संरंभ, उत्साह ये सब पर्याय हैं।

प्रयत्न दो प्रकार का होता है। जीवनपूर्वक और इच्छा, द्वेषपूर्वक।

जीवनपूर्वक—सोते हुए आदमी के प्राणापान की परंपरा को चालू रखनेवाला, एवं जागते समय अन्तःकरण को इतर इन्द्रियों में पहुंचाने वाला प्रयत्न जीवनपूर्वक कहा जाता है। यह धर्म और अधर्म द्वारा आत्मा और मनके संयोग से होता है।

इच्छा-द्वेषपूर्वक—हित की प्राप्ति और अहित के परिहार के लिए योग्य व्यापार का हेतु और शरीर को धारण करने वाला प्रयत्न इच्छा, द्वेष-पूर्वक कहा जाता है। यह इच्छा या द्वेष द्वारा आत्मा और मन के संयोग से होता है।

प्रयत्न को प्रकारान्तर से तीन प्रकार का कहा है—प्रवृत्तिरूप, निवृत्तिरूप और जीवनयोनिरूप।

## २२. धर्म—

धर्म आत्मा का गुण है, कर्ता को प्रिय (सुख) हित (सुखसाधन) और मोक्ष देता है, तथा अन्तिम सुखानुभव से नष्ट होता है। यह विशुद्ध संकल्प द्वारा आत्मा और मन के संयोग से एवं वर्ण आश्रम के लिए किए गए साधनों से उत्पन्न होता है। धर्म प्रत्यक्ष नहीं है किन्तु अनुमानगम्य है, जैसे देवदत्त के प्रयत्न से उत्पन्न हुई वस्तु कार्य एवं देवदत्त के भोग के हेतु होने से देवदत्त के विशेष गुण से उत्पन्न हुई है वैसे देवदत्त का शरीर भी कार्य एवं देवदत्त के भोग का हेतु होने से देवदत्त के विशेष गुण से उत्पन्न हुआ है। शरीरादि को उत्पन्न करने वाला आत्मा का जो यह विशेष गुण है वह ही धर्म है, क्योंकि प्रयत्न इत्यादि तो शरीरादि को उत्पन्न नहीं कर सकते, इस-लिए उसका कोई दूसरा कारण होना चाहिए, वह है धर्म। धर्म सुख का कारण है। स्वर्ग, सुख और उनके साधनरूप शरीरादि का हेतु है।

## २३. अधर्म—

अधर्म भी आत्मा का गुण है। कर्ता को दुःखसाधन और दुःख देता है तथा अन्तिम दुःखानुभव से समाप्त होता है। धर्म के साधन से विपरीत

हिंसा, असत्यभाषण, चोरी इत्यादि शास्त्र में निषिद्ध किये गये कर्म एवं विहित का आचरण न करना तथा प्रमाद उसके हेतु है, दुष्ट संकल्प द्वारा आत्मा और मन के संयोग से अधर्म की उत्पत्ति है। अधर्म नरक, रोग, दुःख इत्यादि का हेतु और अनुमानगम्य है।

२४. संस्कार—

जो अपने उत्पादक के समान जातीय पदार्थ को उत्पन्न करे किन्तु स्वयं उनसे विजातीय हो, ऐसे गुण का नाम संस्कार है। जैसे—अनुभवज्ञान से संस्कार उत्पन्न होता है और संस्कार से स्मृतिज्ञान उत्पन्न होता है। इनमें अनुभव और स्मृति ज्ञानरूप हैं और संस्कार ज्ञानरूप नहीं है।

यह संस्कार तीन प्रकार का है—वेग, भावना और स्थितिस्थापक।

वेग—पृथिवी, जल, तेज, वायु और मनमें रहता है।

भावना—यह आत्मा का गुण है। इसके द्वारा दृष्ट, श्रुत और अनुभूत विषयों में स्मृति और प्रत्यभिज्ञा उत्पन्न होती है।

स्थितिस्थापक—अन्यथाकियेहुए पदार्थ को पुनः स्थितिमें रखनेवाला गुण स्थितिस्थापक है। यह गुण चटाई, रबर इत्यादि पृथ्वी में रहता है।

वेग कर्मसे और भावना ज्ञान से उत्पन्न होती है। द्रव्यगुणविज्ञान में संस्कार शब्द से गुणान्तराधान लिया जाता है वह वहां देखलेना चाहिये।

२५. सत्वगुण

२६. रजोगुण

२७. तमोगुण

सत्वगुण, रजोगुण और तमोगुण, इन तीनों गुणों को आयुर्वेदशास्त्र में महागुण कहा है। सत्व, रज और तम अनुक्रम से सुख, दुःख तथा मोहात्मक हैं अर्थात् सुख, दुःख तथा मोह इनका स्वरूप है। प्रकाश करना, प्रवृत्ति करना तथा नियमन अर्थात् रोकना यह इनका कार्य है, ये परस्पर अभिभव करके अपनी अपनी प्रधानता करते हैं और अपने अपने कार्य के लिये परस्पर का आश्रय भी लेते हैं और सांसारिक कार्यों के त्रिगुणात्मक होने से परस्पर जनक

भी हैं और परस्पर संयोगस्वभाव वाले भी हैं। इनमें सत्वगुण लघु तथा प्रकाशक है, रजोगुण उपष्टम्भक अर्थात् प्रवर्तक और सक्रिय है, तमोगुण गौरव तथा आवरकत्व–रुकावट–करनेवाला है, ये तीनों गुण परस्पर विरोधी होनेपर भी, बत्ती तेल और आग ये परस्पर विरुद्ध होनेपर भी जैसे अन्धकारनाश रूप कार्य करते हैं वैसे पुरुष के भोग और मोक्ष के लिये कार्य करते हैं।

॥ अथ कर्मनिरूपणम् ॥

**संयोगे च विभागे च कारणं द्रव्यमाश्रितम् ।**
**कर्तव्यस्य क्रिया कर्म कर्म नान्यदपेक्षते ॥**

( च० सू० १ )

भाषा—

जो एकद्रव्याश्रित गुण से रहित संयोग तथा विभाग के उत्पन्न करने में अपने से उत्तरभावी किसी भावपदार्थ की उपेक्षा न करता हुआ कारण है, उसे कर्म कहते हैं।

---

टिप्पणी—

संयोगे च विभागे च युगपत्कारणम्। तेन संयोगे उत्तरदेशसंयोगकारके विभागाकारके, तथा विभागे च विभागजविभागमात्रकारणे संयोगाकारणे व्यावृत्तिः सिद्धा, द्रव्यमाश्रितमिति स्वरूपकथनं व्याख्येयं, द्रव्यव्यावृत्तिस्तु कर्म नान्यदपेक्षते इत्यनेनैव सिद्धा। अस्यायमर्थो यत्कर्म उत्पन्नं स्वाश्रयस्य द्रव्यस्य पूर्वदेशविभागे उत्तरदेशसंयोगे च कर्तव्ये नान्यत्कारणं पश्चाद्भावि अपेक्षते, द्रव्यं तु यद्यपि संयोगविभागकारणं युगपद्भवति तथापि तदुत्पन्नं स-यदा कर्मयुक्तं भवति तदैव संयोगविभागकारणं भवति, कर्म तूत्पन्नं करोत्येव परं संयोगविभागौ न तु कारणान्तरं पश्चाद्भावि अपेक्षते, कर्तव्यस्य क्रिया-कर्मेति। एतेन क्रियारूपस्यकर्मण इदं लक्षणं नादृष्टदेरिति ( चक्र० ) तदुक्तं संयोगविभागेष्वनपेक्षकारणमिति कर्मलक्षणम् ( वै० सू० १–१–१७ ) एतस्य

स्वरूपमाह चरकः प्रयत्नादि कर्म चेष्टितमुच्यते ( सू० १-४६ ) प्रयत्नादीत्यादि। प्रयतनं प्रयत्नः, कर्मैवाद्यमात्मनः, यथा तुल्यास्यप्रयत्नं सवर्णम् ( पा० अ० १-१-६ ) इत्यत्र व्याख्यातम। आदिशब्दः प्रकारवाची। तेन संस्कारगुरुत्वादि-जन्यकृत्स्नक्रियावरोधः। यद्यपि चेष्टितं प्राणिव्यापार उच्यते तथापि इह सामान्येन क्रिया विवक्षिता……अन्ये तु प्रयत्नादीति प्रयत्नकारणमिति ब्रुवते, प्रयत्नग्रहणं कारणोपलक्षणं वदन्ति, तेन गुरुत्वादिकार्यस्यापि कर्मणो ग्रहणमिति। प्रयत्नशब्दश्चायुर्वेदेऽपि कर्मवचनो दृश्यते, प्रवृत्तिस्तु खलु चेष्टा कार्यार्था सैव क्रिया प्रयत्नः कार्यसमारम्भश्च ( च० वि० ८ ) इति वचनात् ( चक्र० ) प्रयत्नः, प्रवृत्तिर्निवृत्तिर्जीवनयोनिश्च आदिकारणं यस्य तच्चेष्टितं कर्म उच्यते ( च. प्रदी. ) संस्कार (वेग) गुरुत्व-द्रवत्व-प्रयत्न-संयोग-अदृष्टजन्यं चेष्टितं कर्मपदाभिलप्यमिति निष्कर्षः, चलनात्मकं कर्म इत्यन्नंभट्टोऽपि।

**उत्क्षेपणं ततोऽपक्षेपणमाकुञ्चनं तथा।**
**प्रसारणं च गमनं कर्माण्येतानि पञ्च च॥**
**भ्रमणं रेचनं स्यन्दनोर्ध्वज्वलनमेव च।**
**तिर्यग्गमनमप्यत्र गमनादेव लभ्यते॥ (भा०प०)**

भाषा—

उत्क्षेपण, (उछालना), अपक्षेपण, (नीचे फेंकना) आकुञ्चन (संकुचित करना) प्रसारण और गमन इस प्रकार पांच कर्म माने जाते हैं। भ्रमण, रेचन, स्यन्दन, उर्ध्वज्वलन, तिर्यग्गमन, इन सभी प्रकारों का गमन में ही अन्तर्भाव हो जाता है।

---

टिप्पणी—

ऊर्ध्वदेशसंयोगहेतुरुत्क्षेपणम्। अधोदेशसंयोगहेतुरपक्षेपणम्। शरीरस्य सन्निकृष्टसंयोगहेतुराकुञ्चनम्। विप्रकृष्टसंयोगहेतुः प्रसारणम् ( त० सं० ) उत्तरदेशसंयोगहेतुर्गमनम्। तदुक्तं—उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणि ( वै० सू० १-१-७ ) भ्रमणरेचनस्यन्दनोर्ध्वज्वलन-तिर्यग्गमननमनोन्नमनादीनां गमनशब्देन गतार्थता ज्ञेया, "यदनियत-दिक्प्रदेशसंयोगविभागकरणं तद्गमनम्" इति प्रशस्तोक्तेः।

जो एक साथ संयोग और विभाग करे वह कर्म कहा जाता है, अर्थात् स्वाश्रय द्रव्य का पूर्वदेश से विभाग और उत्तर देश से संयोग कर्म के द्वारा ही होता है, यद्यपि संयोग भी तो उत्तरदेश के संयोग में हेतु होता है, किन्तु वह पूर्व देश के विभाग में हेतु नहीं हो सकता। वैसे विभाग भी पूर्व देश के विभाग में हेतु होता है, किन्तु उत्तरदेश के संयोग में नहीं हो सकता। कर्म तो एक साथ पूर्वदेश से विभाग और उत्तरदेश से संयोग करता है। द्रव्य भी तो संयोग विभाग में युगपत्कारण होता है तथापि उसको कर्म की अपेक्षा रहती है अर्थात् जब द्रव्य कर्मयुक्त होता है तब संयोग विभाग कर सकता है। तात्पर्य-द्रव्य को संयोग विभाग करने में कर्मरूप कारणान्तरकी अपेक्षा रहती है किन्तु उत्पन्न कर्म किसी कारणान्तर की अपेक्षा किये बिना स्वयं एक साथ संयोग विभाग को करता है, कर्म द्रव्य के आश्रित होकर रहता है। यद्यपि संयोग भी तो द्रव्य के आश्रित होकर ही रहता है तथापि वह एक द्रव्य में नहीं रहता, दो द्रव्यों में रहता है। कर्म केवल एक द्रव्य में ही रहता है।

कर्मशब्द से अदृष्टादि का भी बोध होता है तथापि यहां तो केवल क्रिया-रूप कर्म को ही लेना चाहिए।

संस्कार, ( वेग ) गुरुत्व, द्रवत्व, प्रयत्न, संयोग और अदृष्ट द्वारा जो चेष्टा होती है उसको कर्म कहते हैं।

**कर्म के पांच भेद हैं**—उत्क्षेपण, अपक्षेपण, आकुञ्चन, प्रसारण और गमन।

**उत्क्षेपण**—जिसके द्वारा पदार्थ का ऊपर के प्रदेश के साथ संयोग हो उस कर्म को उत्क्षेपण कहते हैं। जैसे पत्थर का ऊपर की ओर फेंकना।

**अपक्षेपण**—जिसके द्वारा पदार्थ का निचले प्रदेश के साथ संयोग हो उस कर्म को अपक्षेपण कहते हैं। जैसे पत्थर का नीचे की ओर फेंकना।

**आकुञ्चन**—जिसके द्वारा पदार्थ का शरीर के सन्निकृष्ट प्रदेश के साथ संयोग हो उस कर्म को आकुञ्चन कहते हैं। जैसे किसी पदार्थ को अपनी ओर खींचना।

प्रसारण—जिसके द्वारा पदार्थ का विप्रकृष्ट ( दूरस्थ ) प्रदेश के साथ संयोग हो उस कर्म को प्रसारण कहते हैं। जैसे हाथ का फैलाना।

गमन—जिसके द्वारा पूर्व प्रदेश से विभाग और आगे के प्रदेश के साथ संयोग हो उस कर्म को गमन कहते हैं। भ्रमण, रेचन, स्यन्दन, उर्ध्वज्वलन, तिर्यग्गमन, नमन, उन्नमन, इत्यादि क्रिया का गमन में समावेश होता है।

अथ सामान्य-विशेषनिरूपणम् ॥

**सामान्यमेकत्वकरं विशेषस्तु पृथक्त्वकृत्।**
**तुल्यार्थता हि सामान्यं विशेषस्तु विपर्ययः॥**

( च० सू० १ )

भाषा—

अनेक पदार्थों में एक बुद्धिकारक सामान्य होता है जैसे अनेक गोव्यक्तियों में गोत्व जाति द्वारा एक बुद्धि होती है और प्रत्येक पदार्थ को भिन्न सिद्ध करने वाले को विशेष कहते हैं।

---

टिप्पणी—

एकत्वकरमिति एकत्वबुद्धिकरं सामान्यं यदनेकासु भिन्नदेशकालासु गोव्यक्तिषु अयं गौरयं गौरित्यादिप्रकारा एकाकारा बुद्धिस्तत्सामान्यं, न हि भिन्नासु व्यक्तिषु अभिन्नं सामान्यमेकरूपं विनाऽभ्रान्ता एकाकारा बुद्धिर्भवतीति भावः,...... विशेषलक्षणं-पृथक्त्वकृदिति। व्यावृत्तबुद्धिकृत्, तेन यद्गोव्यक्त्यन्तरापेक्षयैकबुद्धिकर्तृतया गोत्वं सामान्यं तदेव गोत्वमश्वाद्यपेक्षया व्यावृत्तबुद्धिकर्तृत्वादश्वादीन्प्रति विशेष इत्युक्तं भवति।......कथमनेकासु व्यक्तिषु सामान्यमेकबुद्धिमव्यभिचारिणीं करोतीत्याह—तुल्यार्थता हीत्यादि। तुल्यार्थता एकसामान्यरूपार्थानुयोगिता, एतेन यस्माद्भिन्नासु व्यक्तिषु सामान्यमेकरूप-

सम्बन्धमस्ति, तदस्तदनेकार्थावलम्बा सत्यपि व्यक्तिभेदे एकबुद्धियुक्तेति भावः। विशेषस्तु विपर्यय इति, अतुल्यार्थता हि विशेषत्वं, तेन गोगजयोरतुल्य-गोत्वगजत्वरूपार्थयोः पृथग्बुद्धियुक्तैवेति दर्शितं भवति। (चक्र०) नित्यत्वे सति अनेकसमवेतम्। द्रव्यगुणकर्मवृत्ति। परमपरं चेति द्विविधं सामान्यं। तदुक्तं--सामान्यं विशेष इति बुद्ध्यपेक्षम् (वै० सू० १-२-३) एतदर्थश्च सामान्यं परसामान्यं विशेषोऽपरसामान्यमिति द्वयं बुद्ध्यपेक्षं, बुद्धिरपेक्षा-लक्षणं यस्य तत्। परत्वं अधिकदेशवृत्तित्वमपरत्वं न्यूनदेशवृत्तित्वम्। सत्ताया द्रव्यादि-त्रितयवृत्तित्वेनेतरसामान्यापेक्षयाऽधिकदेशवृत्तित्वं सत्ता सम्बन्धात्सदिति प्रत्य-यानुवृत्तिः, तस्मात्सत्ता सामान्यमेव, तदुक्तं—भावोऽनुवृत्तेरेव हेतुत्वात्सामान्यमेव (वै० सू० १-२-४) द्रव्यत्वादीनां सत्तापेक्षयाऽल्पदेशवृत्तित्वं तच्चानुवृत्ति-व्यावृत्तिप्रत्ययहेतुत्वात्सामान्यं विशेषश्च भवति, तथाहि द्रव्यत्वं परस्पर-विशिष्टेषु पृथिव्यादिषु अनुवृत्तिप्रत्ययहेतुत्वात्सामान्यम्। गुणकर्मभ्यो व्यावृत्ति-प्रत्ययहेतुत्वाद्विशेषः। एवं गुणत्वकर्मत्वादीनामपि बोध्यम्, तदुक्तं-द्रव्यत्वं, गुणत्वं, कर्मत्वं च सामान्यानि विशेषाश्च (वै० सू० १-२-५) सामान्य-रहितत्वे सति नित्यैकद्रव्यमात्रवृत्तिर्विशेषः, तथा चोक्तं "अजातिरेक-वृत्तिश्च विशेष इति शिष्यते" (ता० र०) सावयवपदार्थानामवयवभेदाद्भेदः, परन्तु निरवयवानां परस्परव्यावृत्तिप्रत्ययहेतुर्विशेष एव, स च स्वतो व्यावृत्तो न तत्र विशेषान्तरापेक्षा वर्तते, तदुक्तं "अन्यत्रान्त्येभ्यो विशेषेभ्यः (वै० सू० १-२-६) अन्त्या विशेषा नित्यद्रव्यवृत्तयाभिहितास्तान्वर्जयित्वा सामान्य-विशेषाभिधानं, ते हि विशेषा एव व्यावृत्तिबुद्धिहेतवो न तु सामान्यरूपा अपीति (उपस्कार.) निष्कर्षस्तु जाति-जातिमद्भिन्नत्वे सति वृत्तिमान्सविशेषः।

जिस पदार्थ के द्वारा भिन्न-भिन्न देश और काल में रही हुई अनेक व्यक्तियों में समानता का ज्ञान होता है, उसको सामान्य अथवा जाति कहते हैं। जैसे भिन्न भिन्न देश और काल में रही हुई अनेक गायें हैं। उनमें जिसके द्वारा यह गाय है यह गाय है, ऐसा जो हमें समानता का ज्ञान होता है वह है गोत्व सामान्य या जाति। गाय तो उत्पन्न भी होती है और विनष्ट भी होती है किन्तु उसमें रहे हुए गोत्व की उत्पत्ति और विनाश कभी नहीं होता है, अर्थात् गोत्व नित्य है। गोव्यक्ति अनेक होने पर भी गोत्व एक ही होता है और यह गो में समवाय सम्बन्ध से रहता है। तात्पर्य, अनेक व्यक्ति में रहता हुआ भी जो स्वयं एक और नित्य हो उसको सामान्य कहते हैं। यह सामान्य द्रव्य, गुण और कर्म में रहता है। सामान्य में सामान्य मानने से अनवस्था होती है और विशेष का अर्थ ही असामान्य है उसमें सामान्य कैसे रह सके? यह सामान्य दो प्रकार का होता है—पर और अपर, जो अधिक देश में रहता है वह पर और अल्पदेश में रहता है वह अपर। परसामान्य कभी अपर भी होता है और अपरसामान्य विशेष भी होता है अर्थात् सामान्यविशेषभाव बुद्धि के अधीन है, दृष्टिभेद से दोनों का संभव हो सकता है। जैसे—पदार्थत्व द्रव्यत्व की अपेक्षा परसामान्य है और पदार्थत्व की अपेक्षा द्रव्यत्व अपरसामान्य है, किन्तु पृथिवीत्व की अपेक्षा द्रव्यत्व भी परसामान्य हो सकता है। वैसे अपरसामान्य कभी विशेष भी होता है, जैसे—गोत्व अनेक गोव्यक्तियों में एक प्रकार का ज्ञान उत्पन्न करने से सामान्य कहा जाता है, किन्तु अश्व इत्यादि से गाय की व्यावृत्ति भी करता है अतः अश्व इत्यादि की अपेक्षा विशेष भी कहा जा सकता है। अथवा द्रव्यत्व पृथिवी, जल, तेज आदि में अनुगत होने से और सत्ता की अपेक्षा अल्पदेश में व्यापक होने से अपरसामान्य है किन्तु गुण, कर्मसे व्यावृत्ति का हेतु होने से यह विशेष भी हो सकता है, अर्थात् द्रव्यत्व, गुणत्व, कर्मत्व ये सामान्य भी हैं और विशेष भी हैं। केवल सत्तासामान्य कभी विशेष नहीं हो सकता। यह द्रव्य, गुण और कर्म इन तीनों में रहा हुआ है अतः अधिक देश में व्यापक परसामान्य ही है। विशेष माने अतुल्यार्थता अर्थात् गाय और

गज में रहा हुआ गोत्व और गजत्व । यह असमान होने से इसके द्वारा यह गाय है यह गज है ऐसा पृथक् पृथक् ज्ञान हमें हो सकता है । तात्पर्य, विशेष एक से दूसरे को व्यावृत्त करता है, यद्यपि सावयव पदार्थों का भेद उनके अवयवों के भेद द्वारा सिद्ध हो सकता है किन्तु निरवयव पदार्थों में परस्पर भेद विना विशेष के हो नहीं सकता । अत: नित्य द्रव्य में रहता है ऐसा तार्किकों का सिद्धान्त है । यह अनन्त है । एक व्यक्ति में एक विशेष समवेत रहता है । विशेष में सामान्य और विशेष होते नहीं हैं ।

॥ अथ समवायनिरूपणम् ॥

**समवायोऽपृथग्भावो भूम्यादीनां गुणैर्मतः ।**
**सन्नित्यो यत्र हि द्रव्यं न तत्रानियतो गुणः ॥**

( च० सू० १ )

भाषा---

द्रव्यों का अपने गुणों से (अलग न होने लायक) जो नित्य सम्बन्ध हो उसको समवाय कहा है । जहां द्रव्य रहता है वहां गुण अवश्य ही रहेगा ।

---

टिप्पणी—

समवाय इति लक्ष्यनिर्देशः, अपृथग्भाव इति लक्षणम्, अपृथग्भावोऽयुतसिद्धिः, सहैकावस्थानमिति यावत्, यथा—अवयवावयविनोः, गुणगुणिनोः, कर्मकर्मवतोः, सामान्यसामान्यवतोः । न ह्यवयवादीन् विरहय्यावयवादय उपलभ्यन्ते । अपृथग्भावमेव विशेषयन्नाह—भूम्यादीनां गुणैर्मत इति । भूम्यादीनामाधाराणां गुणैरिति अप्रधानैराधेयैः, तेन आधाराणामाधेयैर्योऽपृथग्भावः समवाय इति । तदुक्तं, अयुतसिद्धानामाधेयाधारभूतानां यः सम्बन्ध इहेति प्रत्ययहेतुः स समवायः ( प० ध० सं० ) स नित्य इति समवायोऽविनाशी । सत्यपि समवायिनां द्रव्याणां नाशे समवायो न नश्यति । तत्र

हेतुमाह यत्र द्रव्यं नियतं नित्यं ( तत्र ) समवायलक्षणः सम्बन्धोपि नित्य एव। एवं तत्र समवायस्य नित्यत्वे सिद्धे एकरूपत्वात्समवायस्यान्यत्रापि नित्यत्वमेव। न चाश्रयद्रव्यनाशे समवायविनाशः। यथा-गोव्यक्तिविनाशेपि गोत्वस्य सामान्यस्य न विनाशः। नित्यस्यैव समवायस्य ते ते पार्थिवद्रव्यादयस्तत्र तत्र व्यञ्जका भवन्ति सामान्यस्येव व्यक्तयः ( चक्र० ) अयुतसिद्धयोरवयवावयविनोः, गुणगुणिनोः, क्रियाक्रियावतोः, जातिव्यक्त्योः, विशेषनित्यद्रव्ययोः सम्बन्धः समवायः, न चासौ संयोगः सम्बन्धिनामयुतसिद्धत्वात्, अन्यतरकर्मादिनिमित्तस्याभावात् विभागान्तत्वादर्शनात् अधिकरणाधिकर्तव्ययोरेव च भावात् इति। सर्वत्र समवायस्तु एक एव नित्यश्चेति न्यायवैशेषिकसिद्धान्तः, समवायः प्रत्यक्ष इति नैयायिकाः, अतीन्द्रियोनुमानगम्य इति वैशेषिकाः, न च समवाये समवायोऽनवस्थापातात्।

अयुतसिद्ध पदार्थों का जो सम्बन्ध है उसको समवाय कहते हैं। अयुत-सिद्ध उन पदार्थों को कहते हैं कि जिन दो पदार्थों में से कोई एक जब तक उसका विनाश नहीं होता तब तक वह दूसरे में आश्रित होकर ही रहता है। अर्थात् जो पदार्थ कभी पृथक् पृथक् विद्यमान न रहे सर्वदा जुड़े हुए आधारा-धेयभाव से रहे अर्थात् भूमि इत्यादि आधार पदार्थों का गन्ध आदि आधार्य गुणों के साथ जो सम्बन्ध है वह समवाय है। वैसे अवयव अवयवी, गुण गुणी, कर्म कर्मवान्, सामान्य सामान्यवान् और विशेष नित्यद्रव्य, इनका सम्बन्ध समवाय होता है। यह समवाय सम्बन्ध नित्य है। जैसे गोव्यक्ति के विनाश होने पर भी गोत्व सामान्य का नाश नहीं होता। वैसे समवायि द्रव्य के विनाश होने पर भी समवाय का नाश नहीं होता, जैसे व्यक्ति द्वारा सामान्य व्यक्त होता है वैसे द्रव्यादि द्वारा समवाय व्यक्त होता है। जहां द्रव्य होता है वहां गुण भी अवश्य होता है। विना गुण द्रव्य रह ही नहीं सकता। यह गुण और गुणी (द्रव्य) का सम्बन्ध समवाय ही है। इस सम्बन्ध को संयोग नहीं कह सकते। क्योंकि संयोग तो द्रव्यों का होता है और जो पहले पृथक् पृथक् होते हैं उनका संयोग होता है, दोनों में से किसी एक के या दोनों के कर्म से होता है और विभाग से उसका नाश होता है तथा दोनों आधार आधेय हों ऐसा नियम नहीं है। किन्तु गुण गुणी आदि में वैसा नहीं है। वे दोनों द्रव्य नहीं होते। कभी पहले पृथक् पृथक् नहीं होते किसी एक या दोनों के कर्मद्वारा उनका सम्बन्ध नहीं होता तथा विभाग द्वारा उनका सम्बन्ध छूट नहीं सकता। दोनों आधार आधार्य हों ऐसा नियम है। अतः उनके सम्बन्ध को संयोग नहीं कह सकते, वह समवाय ही है।

॥ अथ भावनिरूपणम् ॥

**अभावस्तु द्विधा संसर्गान्योन्याभावभेदतः ।**
**प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च ॥**
**एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते ॥ (भा०प०)**

भाषा—

अभाव पदार्थ संसर्गाभाव और अन्योन्याभाव नामसे दो प्रकार का होता है, इसमें संसर्गाभाव प्रागभाव, प्रध्वंसाभाव और अत्यन्ताभाव नामसे तीन प्रकार का होता है ।

---

टिप्पणी--

प्रतियोगिज्ञानाधीनज्ञानविषयत्वमभावत्वम् , द्रव्यादिषड्भावपदार्थप्रतियोगिकभेदवत्त्वमित्यर्थः । स च द्विविधः, संसर्गाभावान्योन्याभावभेदात् । तत्र संसर्गाभावस्त्रिधा—प्रागभावः, प्रध्वंसाभावः, अत्यन्ताभावश्चेति । उत्पत्तेः पूर्वं कार्यस्य विद्यमानोऽभावः प्रागभावः, अनादिः सान्तः, इह कपाले घटो भविष्यतीति प्रतीतिहेतुः, स च कार्यस्योत्पत्तेः पूर्वं कार्यस्य समवायिकारणे तिष्ठति । कार्यस्य विनाशानन्तरमुत्पद्यमानोऽभावः प्रध्वंसाभावः, सादिरनन्तः, प्रतियोगिजन्यः प्रतियोगिसमवायिकारणवृत्तिः, ध्वस्त इति प्रतीतिहेतुः । त्रैकालिकसंसर्गाभावोऽत्यन्ताभावः स चानादिरनन्तो नास्तीत्यनुभवसिद्धो नित्यः, यथा—वायौ रूपं नास्तीति वायौ रूपसंसर्गो निवार्यते । तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकोऽभावोऽन्योन्याभावः, अन्योन्यस्मिंस्तादात्म्येनाभावोऽभवनमिति व्युत्पत्तिः । तादात्म्यनिषेधोऽन्योन्याभावः, यथा—घटः पटो न भवतीत्यादितः, घटात्मा पटो न भवतीत्यर्थो बोध्यः ।

जिस पदार्थ का ज्ञान उसके प्रतियोगी (विरोधी) के ज्ञान के अधीन हो, उसको अभाव कहते हैं। भाव पदार्थ का ज्ञान तो स्वतः होता है जैसे—घट का ज्ञान घट से होता है किन्तु घटाभाव का ज्ञान स्वतः न होकर घट द्वारा होता है अर्थात् घटाभाव का ज्ञान घट के अधीन होता है। जब तक हमें घट का ज्ञान नहीं होता है तब तक घटाभाव का भी ज्ञान नहीं हो सकता। द्रव्यादि छः भाव पदार्थ कहे हैं वे जिसके विरोधी हैं ऐसा अभाव भी एक पदार्थ है।

अभाव के दो भेद हैं—संसर्गाभाव और अन्योन्याभाव। इनमें संसर्गाभाव के तीन भेद हैं—प्रागभाव, प्रध्वंसाभाव और अत्यन्ताभाव।

**प्रागभाव**—कार्य की उत्पत्ति के पहले जो उसका अभाव होता है, उसको प्रागभाव कहते हैं। यह अनादि है किन्तु कार्य उत्पन्न होने से इसका नाश होता है अतः इसको अनादि सान्त कहते हैं। यह कार्य की उत्पत्ति के पहले कार्य के समवायिकारण में रहता है और इसके द्वारा इस कपाल में घट होगा ऐसा ज्ञान होता है।

**प्रध्वंसाभाव**—कार्य के विनाश के पीछे जो उत्पन्न होता है उसको प्रध्वंसाभाव कहते हैं। यह अभाव उत्पन्न होता है किन्तु इसका कभी नाश नहीं होता, अतः इसको सादि अनन्त कहते हैं। यह अपने प्रतियोगी (विरोधी) से उत्पन्न हो कर उसके समवायी कारण में रहता है इसके द्वारा "घट का ध्वंस हुआ" ऐसा ज्ञान होता है।

**अत्यन्ताभाव**—तीनों काल–भूत, भविष्य, वर्तमान–में भाव पदार्थ के संसर्ग के अभाव को अत्यन्ताभाव कहते हैं, "नहीं है" ऐसा अनुभवसिद्ध और नित्य है, जैसे वायु में रूप का संसर्ग नहीं है, न कभी था, न कभी होगा। इस अत्यन्ताभाव से पदार्थ का अभाव प्रतिपादित नहीं होता किन्तु उसके संसर्ग का अभाव प्रतिपादित होता है, जैसे—वायु और रूप दोनों पदार्थ विद्यमान हैं किन्तु इन दोनों का संसर्ग नहीं है, इससे इसको संसर्गाभाव कहा जा सकता है।

**अन्योन्याभाव**—परस्पर दोनों पदार्थों के तादात्म्य के अभाव को अन्योन्याभाव कहते हैं। जैसे—घट पट नहीं है यहां घटात्मा पट नहीं है

अर्थात् इन दोनों में तादात्म्य-ऐक्य नहीं है। इस प्रकार के पारस्परिक अभाव को अन्योन्याभाव कहते हैं।

॥ अथ कारणनिरूपणम् ॥

**अनन्यथासिद्धनियतपूर्ववर्ति कारणम्।**
**समवाय्यसमवायि निमित्तमिति तत्त्रिधा ॥**

भाषा—

कार्य के पूर्वकाल में अवश्य रहनेवाला और अनन्यथासिद्ध, कारण होता है, वह समवायि, असमवायि और निमित्त इस तरह तीन प्रकार का होता है।

---

टिप्पणी—

संप्रति कारणलक्षणमाह अनन्यथेति, कार्यं प्रति नियतत्वे सति पूर्ववर्त्तित्वं कारणत्वम्। कार्यं तु तद्यस्याभिनिर्वृत्तिमभिसन्धाय कर्ता प्रवर्तते (च० वि० ८) कार्यत्वं च प्रागभावप्रतियोगित्वम्। नियतत्वविशेषणानुपादाने (केवलं पूर्ववर्तिकारणमित्युक्ते) पूर्ववर्त्तिनो रासभादेरपि घटादिकारणत्वं स्यात् अतो नियतत्वे सतीति विशेषणं प्रयुक्तम्। नियतत्वं-व्यापकत्वं-तच्च रासभे नास्ति इति नातिव्याप्तिः। नियतपूर्ववर्तिनो दण्डरूपादेरपि घटकारणत्वं स्यादतोऽनन्यथासिद्धत्वमपि कारणलक्षणे निवेशनीयम्। एवं च न तत्रातिव्याप्तिः दण्डरूपादीनामन्यथासिद्धत्वात्। अन्यथासिद्धश्च त्रिविधो भवति, तत्र आद्यो यथा—येन सहैव यस्य यं प्रति पूर्ववर्त्तित्वमवगम्यते तेन तं प्रति सोऽन्यथासिद्धः, यथा—घटं प्रति दण्डेन दण्डरूपं दण्डत्वं च अन्यथासिद्धम्, दण्डेन सहैव दण्डरूपस्य दण्डत्वस्य च घटं प्रति पूर्वभावग्रहणात्। अत्र सहितत्वमेकज्ञानविषयत्वं बोध्यम्। येन—स्वतंत्रान्वयव्यतिरेक-

शालिना, यस्य—स्वतंत्रान्वयव्यतिरेकशून्यस्य इति ज्ञेयं तेन नातथाभूतेन दण्डत्वेन दण्डस्यान्यथासिद्धिः।

**द्वितीयो यथा**—अन्यं प्रति पूर्ववर्त्तित्वे ज्ञाते एव यस्य यं प्रति पूर्ववर्तित्वमवगम्यते तं प्रति सोन्यथासिद्धः, यथा—शब्दं प्रति पूर्ववर्तित्वे ज्ञात एव घटं प्रति आकाशस्य। तस्य घटं प्रति पूर्ववर्त्तिमाकाशत्वेनैव स्यात्, आकाशत्वं हि शब्दसमवायिकारणत्वमेवं च तस्य शब्दं प्रति पूर्ववर्तित्वं गृहीत्वैव घटं प्रति पूर्ववर्तित्वं ग्राह्यमिति तदन्यथासिद्धम्। एवं कुलालोपि पुत्रकृतं घटं प्रति अन्यथासिद्धः, तद्यथा घटं प्रति कुलालपितुः कुलालपितृत्वेन रूपेण पूर्ववर्तित्वं ग्राह्यः, कुलालपितृत्वं च कुलालनियतपूर्ववर्तित्वमिति कुलालं प्रति पूर्ववर्तित्वं गृहीत्वैव घटं प्रति पूर्ववर्तित्वं ग्राह्यमित्यन्यथासिद्धम्।

**तृतीयो यथा**—अन्यत्र क्लृप्तनियतपूर्ववर्तिन एव कार्यसंभवे तत्सहभूतोऽन्यथासिद्धः, यथा—पाकजस्थले गन्धं प्रति रूपप्रागभावः, अपाकजस्थले गन्धं प्रति क्लृप्तनियतपूर्ववर्तिना गन्धप्रागभावेन इव पाकजस्थलेपि गन्धं प्रति गन्धप्रागभावस्य कारणत्वसंभवे रूपप्रागभावोऽन्यथासिद्ध इत्यर्थः। तत्कारणं पुनः समवायि, असमवायि, निमित्तभेदात्त्रिविधम्।

**समवायिकारणम्**—यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणं, यथा—तन्तवः पटस्य, कपालादयो घटस्य, पटश्च स्वगतरूपादेः। इदं कार्ययोनिरित्युच्यते तथाहि कार्ययोनिस्तु सा या विक्रियमाणा कार्यत्वमापद्यते (च० वि० ८) समवायिकारणं द्रव्यमेवेति नियमः।

**असमवायिकारणम्**—कार्येण कारणेन वा सह एकस्मिन्नर्थे समवेतत्वे सति कारणमसवायिकारणम्। यथा—तन्तुसंयोगः पटस्य, कपालादिसंयोगो घटस्य, अत्र कार्यकारणयोरेकाधिकरणनियमात्पटात्मककार्येण सह एकस्मिंस्तन्तुरूप अर्थे—अधिकरणे तन्तुसंयोगः समवायसम्बन्धेन वर्तते, एवं घटात्मककार्येण सह एकस्मिन्कालरूप अर्थे—अधिकरणे कपालसंयोगः समवायसम्बन्धेन वर्तते तस्मात्क्रमादत्र तन्तुसंयोगः कपालसंयोगश्च असमवायिकारणम्। द्वितीय-

मुदाहरति—कारणेन सहेति, घटरूपस्य समवायिकारणभूतपटेन सह एकस्मिन्नर्थे तन्तौ समवेतत्वात्तन्तुरूपं पटरूपस्यासमवायिकारणम्। असमवायिकारणं गुणः कर्म चेति नियमः।

निमित्तकारणम्—तदुभयभिन्नं कारणं निमित्तकारणम्, यथा—तुरीवेमादिकं पटस्य, दण्डादिकं घटस्य।

॥ इति कारणनिरूपणम् ॥

भगनाथ्धिधराजदीक्षितात्मभुवा श्रीबलवन्तशर्मणा रचितस्य पदार्थदर्शनस्य च खण्डोन्तमगाद्द्वितीयकः ॥

जो उत्पन्न होता है उसको कार्य कहते हैं। आयुर्वेद में कर्ता जिसके लिए प्रवृत्ति करता है उसका कार्य शब्द से व्यवहार किया जाता है। न्याय-वैशेषिक वालों ने कार्य को प्रागभाव प्रतियोगी कहा है, कार्य के उत्पन्न होने से कार्य के प्रागभाव का नाश होता है ऐसा उनका सिद्धान्त है।

कार्य जिससे उत्पन्न होता है उसको कारण कहते हैं। इसका लक्षण है अनन्यथासिद्धनियतपूर्ववर्ति कारणम्, अर्थात् जो कार्य से पूर्ववर्ती हो उसको कारण कहते हैं किन्तु इतने लक्षण से घटरूप कार्य का रासभ भी कारण हो जायगा। घट बनाने की मिट्टी रासभ के द्वारा लाई गई है अतः वह भी घट का पूर्ववर्ती है इसलिए केवल पूर्ववर्ती नहीं किन्तु नियतपूर्ववर्ती अर्थात् अवश्य पूर्ववर्ती हो। रासभ अवश्य पूर्ववर्ती नहीं है, रासभ के विना दूसरे प्रकार से भी मिट्टी ले आ सकते हैं। किन्तु दण्ड घट के प्रति नियतपूर्ववर्ती होने से कारण है वैसे दण्डका रूप, दण्ड में रही हुई दण्डत्व जाति इत्यादि भी दण्ड के समान घट के नियत पूर्ववर्ती होने से उक्त लक्षण की इनमें अतिव्याप्ति न हो जाय इसलिए अनन्यथासिद्ध पद लगाया गया है अर्थात् नियत पूर्ववर्ती एवं अनन्यथासिद्ध हो वही ही कारण होता है। यहां घट के प्रति दण्ड को कारण कहने से दण्डरूप और दण्डत्व उसके साथ स्वयं आ जाते हैं। अतः वे अन्यथासिद्ध हो गये। ऐसे अन्यथासिद्ध को कारण नहीं कहा जाता।

उक्त कारण तीन प्रकार का है—समवायि, असमवायि और निमित्त।

**समवायि कारण**--कार्य जिस कारण में समवेत होकर उत्पन्न होता है उसको समवायिकारण कहते हैं। जैसे तन्तु पट का समवायिकारण है, कपाल घट के समवायिकारण हैं। पट अपने रूप का समवायिकारण है। आयुर्वेद में इसको कार्ययोने कहा है। जो कार्य के रूप में परिणत होता है वह कारण कार्ययोनि कहा जाता है। समवायिकारण द्रव्य ही होता है ऐसा नियम है।

**असमवायिकारण**--जो कारण कार्य के साथ एक अधिकरण में समवेत होता है उसको असमवायि कारण कहते हैं। जैसे तन्तुओं का संयोग पट का असमवायि कारण है यहां संयोगरूप कारण और पट रूप कार्य दोनों तन्तुरूप एक अधिकरण में समवेत हैं।

अथवा जो कारण कारण के साथ एक अधिकरण में समवेत होता है उसको असमवायि कारण कहते हैं। जैसे तन्तुओं का रूप पट के रूप का असमवायिकारण है, यहां पट के रूपकार्य का समवायिकारण पट और तन्तु का रूप दोनों तन्तुरूप एक अधिकरण में समवेत हैं। असमवायिकारण गुण और कर्म होते हैं ऐसा नियम है।

### असमवायिकारण प्रथम भेद

कार्य के साथ कारण का एक अधिकरण में-समवाय सम्बन्ध से-रहना।

यहां संयोग पट का असमवायि कारण हुआ।

### असमवायि कारण द्वितीय भेद

कारण के साथ कारण का एक अधिकरण में समवायसम्बन्ध से रहना।

यहां तन्तु का रूप पट के रूप का असमवायि कारण हुआ।

निमित्त कारण—ऊपर कहे दोनों कारणों से भिन्न कारण को निमित्त कारण कहते हैं। जैसे—तुरी, वेमा इत्यादि पट का, दण्ड, चाक इत्यादि घट का निमित्त कारण है।

# तृतीयः परिशिष्टखण्डः

तत्र साङ्ख्यप्रक्रियानिरूपणम्

**मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।**
**षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः॥**

भाषा--

केवल प्रकृतिस्वभाव प्रधान प्रकृति और विकृति उभय स्वभाव वाले महदादि सात, सोलह विकार और प्रकृति विकृति दोनों स्वभावों से निर्मुक्त पुरुष इस प्रकार सांख्याभिमत पचीस तत्व हैं।

---

टिप्पणी—

तत्र सर्व एव अचेतनः वर्गः पुरुषः पञ्चविंशतितमः कार्यकारणसंयुक्तश्चेतयिता भवति। सत्यप्यचैतन्ये प्रधानस्य पुरुषकैवल्यार्थं प्रवृत्तिमुपदिशन्ति शरीरादींश्चात्र हेतूनुदाहरन्ति।

व्यक्ताव्यक्तयोः वैधर्म्यम्—

**हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्।**
**सावयवं परतन्त्रं व्यक्तं तद्विपरीमव्यक्तम्॥१०॥**

भाषा—

उत्पत्ति और विनाशशील, अव्यापक, सक्रिय, अनेक स्वकारणाश्रित, प्रधानका ज्ञापक, सावयव और परतन्त्र अर्थात् स्वकारणाधीन व्यक्त होता है और इन धर्मों से विपरीत धर्मों वाला अव्यक्त होता है। अव्यक्त के विपरीत धर्म इस प्रकार हैं—

**अहेतुमत्, नित्य, व्यापक, निष्क्रिय, एक, अनाश्रित, अलिङ्ग, अनवयव, स्वतन्त्र।**

व्यक्ताव्यक्तयोः साधर्म्यम्—

**त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि ।**
**व्यक्तं तथा प्रधानम्—**

भाषा—

सुख दुःख और मोहात्मक सत्व रज और तमोरूप तीनों गुणोंवाला, प्रधान से अभिन्न, बाह्यविषय स्वरूप, अनेक पुरुषों के लिए सामान्य, जड़ और प्रसवधर्मि, व्यक्त और अव्यक्त दोनों हैं। अर्थात् व्यक्त और अव्यक्त दोनों में उपर्युक्त धर्मों की स्थिति मानी गई है।

---

टिप्पणी—

सर्वभूतानां कारणमकारणं सत्वरजस्तमोलक्षणमष्टरूपमखिलस्य जगतः संभवहेतुरव्यक्तं नाम। तदेकं बहूनां क्षेत्रज्ञानामधिष्ठानं समुद्र इवौदकानां भावानाम्।

**तद्विपरीतस्तथा च पुमान् ॥ ११ ॥**

भाषा—

और उपर्युक्त धर्मों से रहित पुरुष है।

---

टिप्पणी—

अत उर्ध्वं प्रकृतिपुरुषयोः साधर्म्यवैधर्म्ये व्याख्यास्यामः। तद्यथा—उभावप्यनादी, उभावप्यनन्तौ, उभावप्यलिङ्गौ, उभावपि नित्यौ, उभावप्यनपरौ, उभौ च सर्वगताविति।

एका तु प्रकृतिरचेतना त्रिगुणा बीजधर्मिणी प्रसवधर्मिणी, अमध्यस्थधर्मिणी चेति। बहवस्तु पुरुषाः चेतनावन्तोऽगुणाः अबीजधर्माणः अप्रसवधर्माणः मध्यस्थधर्माणश्चेति।

न चायुर्वेदशास्त्रेषूपदिश्यन्ते सर्वगताः क्षेत्रज्ञाः नित्याश्च, असर्वगतेषु च क्षेत्रज्ञेषु नित्यपुरुषख्यापकान् हेतूनुदाहरन्ति, आयुर्वेदशास्त्रे च सर्वगताः क्षेत्रज्ञाः नित्याश्च तिर्यग्योनिमानुषदेवेषु संचरन्ति धर्माधर्मनिमित्तं त एतेऽनुमानग्राह्याः परसूक्ष्माश्चेतनावन्तः शाश्वताः लोहितरेतसो सन्निपातेष्व-

भिव्यज्यन्ते, यतोऽभिहितं पञ्चमहाभूतशरीरिसमवायः पुरुषः ( सू० अ० १ ) इति। स एव कर्मपुरुषः चिकित्साधिकृतः।

तस्य सुखदुःखे इच्छाद्वेषौ प्रयत्नः प्राणापानावुन्मेषनिमेषौ बुद्धिर्मनः सङ्कल्पो विचारणा स्मृतिर्विज्ञानमध्यवसायो विषयोपलब्धिश्च गुणाः।

सात्विकास्तु—आनृशंस्यं संविभागरुचिता तितिक्षा सत्यम् धर्मः आस्तिक्यम्, ज्ञानम्, बुद्धिः, मेधा, स्मृतिः, धृतिः, अनभिष्वङ्गश्च।

राजसास्तु—दुःखबहुलताऽटनशीलताऽधृति, अहङ्कार आनृतिकत्वम्, अकारुण्यम्, दम्भो, मानो, हर्षः, कामः, क्रोधश्च।

तामसास्तु—विषादित्वम्, नास्तिक्यम्, अधर्मशीलता, बुद्धेर्निरोधः अज्ञानम्, दुर्मेधस्त्वम्, अकर्मशीलता, निद्रालुत्वञ्चेति।

ननु कथमेकमव्यक्तमनेकधर्माणां सर्वभूतानां कारणमित्याशङ्क्याऽव्यक्तात् सर्वभूतानामुत्पत्तिक्रममाह—

**प्रकृतेर्महांस्ततोहङ्कारस्तस्माद्गणश्च षोडशकः।**
**तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि ॥२२॥**

भाषा—

प्रकृति से महत्तत्व, महत्तत्व से अहङ्कार और उससे एकादश इन्द्रियाँ और पञ्चतन्मात्राएँ, इस प्रकार सोलह विकार और पञ्चतन्मात्राओं से पञ्चमहाभूतों की उत्पत्ति होती है।

---

टिप्पणी—

तस्मादव्यक्तान्महानुत्पद्यते तल्लिङ्ग एव।

तत्र महतः स्वरूपमाह—

**अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम्।**
**सात्विकमेतद्रूपम् तामसमस्माद्विपर्यस्तम् ॥ २३ ॥**

भाषा—

अध्यवसायात्मिका बुद्धि के धर्म, वैराग्य, ऐश्वर्य और ज्ञान ये सात्विक धर्म हैं और इससे विपरीत तामस धर्म हैं।

---

टिप्पणी—

तल्लिङ्गाच्च महतः तल्लक्षण एवाहङ्कार उत्पद्यते।

अहङ्कारस्वरूपमाह—

**अभिमानोऽहङ्कारस्तस्मात द्विविधः प्रवर्तते सर्गः।**
**एकादशकश्च गणस्तन्मात्रः पञ्चकश्चैव ॥ २४ ॥**

भाषा—

अभिमानात्मक अहङ्कार से एकादश इन्द्रियों की और पांच तन्मत्राओं की उत्पत्ति मानी है। इसमें एकादश इन्द्रियों को सात्विक और पाँच तन्मात्राओं को तामस माना है।

---

टिप्पणी—

अभिमानात्मकादहंकारात् द्विविधः एकादशगणात्मकः तन्मात्रात्मकश्च सर्गः प्रवर्तते।

सर्गत्रैविध्यप्रदर्शनमुखेन अहंकारस्य त्रैविध्यं प्रदर्शयति—

**सात्विक एकादशकः प्रवर्तते वैकृतादहंकारात।**
**भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम् ॥२५॥**

भाषा—

सात्विक अहंकार से सात्विक एकादश इन्द्रियों की उत्पत्ति और तामस अहंकार से पांच तन्मात्राओं की उत्पत्ति होती है। अहंकार के रजोगुण द्वारा सत्व और तमोगुण में प्रवृत्ति होती है अतः रजोगुण से दोनों कार्यों की उत्पत्ति मानी जाती है।

स त्रिविधः वैकारिकः तैजसो भूतादिरिति । तत्र वैकृतादहंकारात् तैजससहायात् तल्लक्षणान्येवैकादशेन्द्रियाण्युत्पद्यन्ते । तद्यथा—श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाग्घस्तोपस्थपायुपादमनांसीति । तत्र पूर्वाणि पञ्च बुद्धीन्द्रियाणि, इतराणि पञ्च कर्मेन्द्रियाणि, उभयात्मकं मनः । भूतादेरपि तैजससहायात्तल्लक्षणान्येव पञ्च तन्मात्राण्युत्पद्यन्ते—शब्दतन्मात्रं, स्पर्शतन्मात्रं, रूपतन्मात्रं, रसतन्मात्रं, गन्धतन्मात्रमिति । तेषां विशेषाः शब्दस्पर्शरूपरसगन्धाः तेभ्यो भूतानि व्योमानिलानलजलोर्व्यः । एवमेषा तत्वचतुर्विंशतिर्व्याख्याता ।

पुनः पञ्चानां महाभूतानां प्रत्येकस्य लक्षणं, यथा, तत्र सत्वबहुलमाकाशं, रजोबहुलो वायुः, सत्वरजोबहुलोऽग्निः, सत्वतमोबहुला आपः, तमोबहुला पृथिवीति ।

अन्योन्यानुप्रविष्टानि सर्वाण्येतानि निर्दिशेत् ।
स्वे स्वे द्रव्ये तु सर्वेषां व्यक्तं लक्षणमिष्यते ॥
तन्मयान्येव भूतानि तद्गुणान्येव चादिशेत् ।
तैश्च तल्लक्षणः कृत्स्नो भूतग्रामो व्यजन्यत ॥
तस्योपयोगोऽभिहितश्चिकित्सां प्रति सर्वदा ।
भूतेभ्यो हि परं यस्मान्नास्ति चिन्ता चिकित्सिते ॥

आन्तरिक्षाः शब्दः शब्देन्द्रियं सर्वच्छिद्रसमूहो विविक्तता च । वायव्यास्तु स्पर्शः स्पर्शेन्द्रियं सर्वचेष्टासमूहः सर्वशरीरस्य न्यूनं लघुता च । तैजसास्तु रूपं रूपेन्द्रियम् वर्णः सन्तापो भ्राजिष्णुता पक्तिरमर्षस्तैक्ष्ण्यम् शौर्यं च । आप्यास्तु रसो रसनेन्द्रियं सर्वद्रव्यसमूहो गुरुता शैत्यं स्नेहो रेतश्च । पार्थिवास्तु गन्धो गन्धेन्द्रियम् सर्वमूर्तसमूहो गुरुता चेति ।

**अष्टौ प्रकृतयः प्रोक्ता विकाराः षोडशैव तु ।**
**क्षेत्रज्ञश्च समासेन स्वतन्त्रपरतन्त्रयोः ॥**
**बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनस्पर्शनकानि ।**
**वाक्पाणिपादपायूपस्थान् कर्मेन्द्रियाण्याहुः ॥**
**उभयात्मकमत्र मनः सङ्कल्पकमिन्द्रियं च साधर्म्यात् ।**
**गुणपरिणामविशेषात् नानात्वं बाह्यभेदाच्च ॥**

भाषा—

चक्षु, श्रोत्र, घ्राण, रसना, त्वक् ये ज्ञानेन्द्रियां हैं, और वाक्, पाणि, पाद, पायु और उपस्थ ये कर्मेन्द्रियां हैं। सङ्कल्प करनेवाला मन उभयात्मक है अर्थात् ज्ञानेन्द्रियात्मक और कर्मेन्द्रियात्मक है। एक ही अहङ्कार से, गुण और परिणाम के भेदसे अनेकत्व और बाह्य भेद होते हैं।

---

टिप्पणी—

तत्र बुद्धीन्द्रियाणां शब्दादयो विषयाः, कर्मेन्द्रियाणां यथासंख्यं वचनादानानन्दविसर्गविहरणानि।

स्वः स्वश्चैषां विषयोऽधिभूतं स्वयमध्यात्मम् अधिदैवतम्। अथ बुद्धेर्ब्रह्मा, अहङ्कारस्येश्वरः, मनसश्चन्द्रमाः, दिशः श्रोत्रस्य, त्वचो वायुः, सूर्यश्चक्षुषः, रसनस्यापः, पृथिवी घ्राणस्य, वाचोऽग्निः, हस्तयोरिन्द्रः, पादयोर्विष्णुः, पायोर्मित्रः प्रजापतिरुपस्थस्येति।

इन्द्रियेणेन्द्रियार्थं तु स्वं स्वं गृह्णाति मानवः।
नियतं तुल्ययोनित्वान्नान्येनान्यमिति स्थितिः॥

यतोऽभिहितं "तत्संभवद्रव्यसमूहो भूतादिरुक्तः" सू० अ० १। भौतिकानि चेन्द्रियाणि आयुर्वेदे वर्ण्यन्ते तथेन्द्रियार्थाः।

**दृष्टमनुमानमाप्तवचनञ्च सर्वप्रमाणसिद्धत्वात्।**
**त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि॥४॥**

भाषा—

चार प्रकार के प्रमेय पदार्थों की सिद्धि प्रमाणों के अधीन है अतः प्रत्यक्ष, अनुमान, तथा आप्तवचन इस प्रकार तीन ही प्रमाण माने हैं। क्योंकि ये तीन प्रमाण सब दार्शनिकों ने माने हैं।

**असदकरणात् उपादानग्रहणात् सर्वसम्भवाभावात्।**
**शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्॥६॥**

भाषा—

जो कारण में अथवा अन्यत्र अविद्यमान है उसका उत्पादन नहीं होता और कार्योत्पत्ति के लिए उपादान कारण का ग्रहण अनिवार्य है। सब पदार्थ सर्वत्र उत्पन्न नहीं होता और जिस कार्य के उत्पन्न होने की जिस कारण में शक्ति होती है उसीसे उस कार्य की उत्पत्ति होती है और इस कार्य का यह कारण है ऐसा व्यवहार भी होता है अत: यह सिद्ध होता है कि कारण में कार्य सत् है।

**प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ।**
**अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥१२॥**

भाषा—

प्रीति, अप्रीति और विषाद अर्थात् सुख दुःख और मोहात्मक तीनों सत्व रज और तमोगुण हैं। इसमें सत्व का कार्य प्रकाश, रज का कार्य प्रवृत्ति और तमोगुण का कार्य नियम है। ये तीनों गुण पारस्परिक अभिभव के अधीन अभिभववृत्ति, परस्पर सहायता के कारण आश्रयवृत्ति और समस्त पदार्थों के त्रिगुणात्मक होने से जननवृत्ति और परस्पर संयुक्त रहने से मिथुनवृत्तिवाले होते हैं।

**सत्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलञ्च रजः ।**
**गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥१३॥**

भाषा—

सत्वगुण, लघु और प्रकाशक है, प्रवर्तक और चञ्चल स्वभाववाला रजोगुण है, और तमोगुण प्रतिबन्धक और भारी है। इन सबों के पारस्परिक विरोध होने पर भी तेल, बत्ती और आग से निर्मित दीपक की भांति विषय प्रकाश में समर्थ होते हैं अर्थात् विषयप्रकाश के समय पारस्परिक सहयोग से रहते हैं।

**तस्मान्न बध्यते नापि मुच्यते नापि संसरति कश्चित् ।**
**संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥६२॥**

भाषा—

आत्मा वास्तविक रूप से न बद्ध होता है न मुक्त होता है और न ही सांसारिक प्रवृत्ति करता है परन्तु इन सब कार्यों के करने वाली केवल प्रकृति ही है।

**एवं तत्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम्।**
**अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम्॥६४॥**

भाषा—

इस प्रकार तत्वज्ञान के अभ्यास से—'नास्मि' अर्थात् मैं कर्ता इत्यादि नहीं हूं, 'न मे' अर्थात् दुःखादि धर्म मेरे नहीं है और 'नाहम्' अर्थात् मैं कुछ भी नहीं हूँ। इस प्रकार का विपर्यय संशय से शून्य विशुद्ध केवल ज्ञान उत्पन्न होता है।

निदान स्थान से सर्वप्रकार के रोगों के लक्षणों को जानकर वैद्य चिकित्सा के लिये प्रस्तुत हो, परन्तु रोगों के अधिष्ठान-भूत शरीर और शरीर के कारण-भूत स्थावर जङ्गम-भूत और पञ्चमहाभूतों के ज्ञान के बिना चिकित्सा का अस्तित्व असम्भव है, अत एव शारीरस्थान में—अथातः सर्वभूतचिन्ताशारीरं व्याख्यास्यामः—इस प्रकार उपक्रम करके स्थावर जङ्गम भूत और पञ्चमहाभूतों की उत्पत्ति, लक्षण और क्रिया विषयिणी प्रतिज्ञा कीगई है।

इस प्रकार उपक्रम के अनन्तर प्रतिज्ञा के अनुसार ही प्रथम अव्यक्त का निरूपण करते हुए उसके स्वरूप का वर्णन किया है कि—समस्त भूतों के कारणस्वरूप और स्वयं अकारण अर्थात् ( अव्यक्त किसी से जन्य नहीं है ) केवल प्रकृति स्वभाव वाला, सत्व रज और तमोगुणविशिष्ट, महान्, अहङ्कार, अव्यक्त और पांच महाभूत इसप्रकार आठ प्रकार के रूप वाला, समस्त जगत का कारण अव्यक्त है। वह एक ही अव्यक्त अनेक जीवों का आधार है जिस प्रकार समुद्र अनेक जलीय जीव और नदी-नदादि विकारों का आधार है।

इस प्रकार सत्व रज और तमोगुण वाले अव्यक्त से उसी स्वभाववाला महान् व्यक्त होता है। और सत्वरजस्तमः स्वभाव वाले महान् से अहङ्कार उत्पन्न होता है।

वह अहङ्कार तीन प्रकार का होता है—वैकारिक, तैजस और भूतादि। उसमें तैजस ( राजस ) अहङ्कार की सहायता से वैकारिक अहङ्कार में सत्व स्वभाववाले अर्थात् प्रकाशक एकादश इन्द्रियों की उत्पत्ति होती है। एकादश इन्द्रियां इस प्रकार हैं—श्रोत्र, त्वक्, चक्षु, जिह्वा, घ्राण, वाक्, हस्त, उपस्थ पायु, पाद और मन। इनमें प्रथम पांच ज्ञानेन्द्रिय और उनसे अनन्तर की पांच कर्मेन्द्रियां हैं। ज्ञान और क्रिया उभयस्वभाव वाला मन है।

इस प्रकार तैजस ( राजस ) की सहायता वाले भूतादि ( तामस ) अहंकार से तमः स्वभाव वाले पञ्चतन्मात्रों की उत्पत्ति होती है। पञ्चतन्मात्र इस प्रकार हैं-शब्दतन्मात्र स्पर्शतन्मात्र, रूपतन्मात्र, रसतन्मात्र, और गन्धतन्मात्र।

इन तन्मात्रों का विशेष स्वरूप शब्द, स्पर्श, रूप, रस, और गन्ध हैं। इन तन्मात्रों से पृथ्वी, जल, तेज, वायु, आकाश इन पांच महाभूतों की उत्पत्ति होती है। इस प्रकार अव्यक्त, महान्, अहंकार, पांच ज्ञानेन्द्रिय, पांच कर्मेन्द्रिय, मन, पांच तन्मात्रा और पांच महाभूत इन चौबीस तत्वों को सांख्यानुयायियों के अनुसार आयुर्वेद वाले भी अङ्गीकार करते हैं।

उपर्युक्त ज्ञानेन्द्रियों के शब्द, स्पर्श, रूप, रस और गन्ध विषय हैं और कर्मेन्द्रियों के वचन, आदान, आनन्द, विसर्ग और वितरण विषय हैं।

अव्यक्त, महान्, अहंकार, और पांच तन्मात्रा ये आठ प्रकृति हैं और बाकी सोलह विकार हैं।

उपर्युक्त चौबीस तत्वों में बुद्धि, अहंकार, मन इत्यादि प्रकाशक तत्वों का अध्यात्म, अधिभूत और अधिदैवत इस प्रकार विषय और अनुग्राह के भेद से भेद माने गये हैं। इसमें स्वयम्प्रकाशक अध्यात्म, विषय अधिभूत और अनुग्राहक अधिदैवत कहा जाता है।

विस्तृत वर्णन इस प्रकार है:—

| प्रकाशक | विषय | अनुग्राहक |
|---|---|---|
| अध्यात्म | अधिभूत | अधिदैवत |
| बुद्धि | बौद्धव्य | ब्रह्मा |
| अहंकार | अहंकर्तव्य | ईश्वर ( रुद्र ) |
| मन | मन्तव्य | चन्द्र |
| श्रोत्र | श्रोतव्य | दिशा |
| त्वचा | स्पर्शनीय | वायु |
| चक्षु | दृश्य | सूर्य |
| रसना | रसनीय | वरुण |
| घ्राण | घ्रातव्य | भूमि |
| वाक् | वक्तव्य | अग्नि |
| हस्त | आदातव्य | इन्द्र |
| पाद | गन्तव्य | विष्णु |
| पायु | विसर्जनीय | मित्र |
| उपस्थ | आनन्दनीय | प्रजापति |

इस प्रकार चौबीस तत्व का समस्त समुदाय अचेतन है और पच्चीसवां पुरुष महदादि कार्यरूप विकार और मूलप्रकृतिरूप कारण से संयुक्त होकर प्रवर्तक होता है। यद्यपि प्रधान अचेतन है तथापि जिस प्रकार अचेतन दूध वत्सवृद्धयर्थ प्रवृत्ति करता है इसी प्रकार अचेतन प्रधान भी पुरुष के कैवल्यार्थ अर्थात् मोक्षार्थ प्रवृत्ति करता है।

इसके अनन्तर प्रकृति और पुरुष के साधर्म्य और वैधर्म्य का इस प्रकार वर्णन है—प्रथम साधर्म्य देखिये-दोनों ( प्रकृति और पुरुष ) अनादि, दोनों अनन्त, दोनों अलिङ्ग, दोनों नित्य, दोनों पर और दोनों सर्वव्यापक हैं। इस प्रकार दोनों का साधर्म्य बताया।

अब वैधर्म्य देखिये—प्रकृति एक है, अचेतन है, सत्व रज और तमोगुण वाली त्रिगुणा, महदादि विकारों को बीज रूप से रखने वाली बीजधर्मिणी

और इसी प्रकार उत्पन्न करने वाली होने से प्रसवधर्मिणी और सत्वादि गुण-होने से अमध्यस्थ धर्मिणी है।

इसके विपरीत पुरुष अनेक, चेतन, गुणरहित, अबीजधर्मा, अप्रसवधर्मा और मध्यस्थधर्मा होता है।

कार्यकारण के समान गुण नियम के अनुसार ये सम्पूर्ण विशेष कारण के अनुसार सत्व रज और तमोगुण वाले होते हैं।

कुछ लोग सत्वादियुक्त और महदादि में प्रतिबिम्बित पुरुष को भी सत्वादि गुणमय मानते हैं—परन्तु—

वैद्यकमें तो—

आयुर्वेदशास्त्र में सर्वव्यापक जीवों को नित्य नहीं बताया है परन्तु अव्यापक जीवों में नित्यता मानी गई है। धर्म और अधर्म के निमित्त से पशु, पक्षी, मनुष्य देवादि योनियों में गमनागमन माना गया है। जीवों का स्वरूप अनुमान-ग्राह्य, परम सूक्ष्म, चेतन, नित्य, शुक्र और शोणित के संयोग से अभिव्यक्त होनेवाला है।

इस प्रकार का कर्म-पुरुष ही चिकित्सा के योग्य मानागया है।

इस जीवात्मा के—सुख, दुःख, इच्छा, द्वेष, प्रयत्न, प्राण, अपान, उन्मेष, निमेष, बुद्धि, मन, सङ्कल्प, विचारणा, स्मृति, विज्ञान, अध्यवसाय और विषयप्राप्ति ये गुण हैं।

सात्विक गुण—आनृशंस्य, संविभागरुचिता, तितिक्षा, सत्य, धर्म, आस्तिकता, ज्ञान, बुद्धि, मेधा, स्मृति, धृति, अनभिष्वङ्ग, ( विषयों में अनासक्ति )।

राजसगुण—दुःखबहुलता, अटनशीलता, अधृति, अहङ्कार, आनृतिकत्व ( असत्यवादिता ), अकारुण्य, दम्भ, मान, हर्ष, काम क्रोध।

तामस गुण—विषादित्व, नास्तिक्य, अधर्मशीलता, बुद्धि का निरोध, अज्ञान, दुष्टबुद्धिता, अकर्मशीलता, निद्रालुता।

जीवात्मा के गुणों और सत्वादि युक्त मन बुद्धि के सात्वकादि गुणनिरूपण के अनन्तर पांच महाभूतों के गुणों का निरूपण करते हैं।

**आकाश के गुण**--शब्द, श्रवणेन्द्रिय, समग्र छिद्रों का समूह, अर्थात् खाली जगहों का समुदाय और विविक्तता अर्थात् विशाल रिक्त स्थान।

वायवीय—स्पर्श, स्पर्शेन्द्रिय, सर्वचेष्टासमूह, सर्वशरीरस्पन्दन, लघुता।

तैजस—रूप, रूपेन्द्रिय, वर्ण, सन्ताप, भ्राजिष्णुता, ( दीप्ति ) पक्ति, ( पाक ) अमर्ष, तीक्ष्णता, शौर्य।

आप्य—रस, रसनेन्द्रिय, सर्वद्रव्यसमूह, गुरुता, शीतलता, स्नेह, रेत।

पार्थिव—गन्ध, गन्धेन्द्रिय, सर्वमूर्तसमूह, गुरुता।

**अब भूतों का लक्षण कहते हैं:—**

सत्वबहुल आकाश होता है, रजोगुणबहुल वायु, सत्वरजोबहुल अग्नि, सत्वतमोबहुल जल, तमोबहुल पृथिवी।

इस प्रकार सब भूतों के प्रत्येक पृथक् लक्षणों के रहने पर भी परस्पर अनुप्रविष्ट होने से सब के गुण सब में प्रतीत होते हैं परन्तु तत्तद्द्रव्य में विशेष गुणप्रतीति होती है।

**साङ्ख्यप्रक्रिया।**

## ॥ अथ तद्विद्यसंभाषानिरूपणम् ॥

द्विविधा तु खलु तद्विद्यसंभाषा भवति, सन्धाय संभाषा विगृह्य संभाषा च ।

तत्र ज्ञानविज्ञानवचनप्रतिवचनशक्तिसंपन्नेन, अकोपनेन, अनुपस्कृतविद्येन, अनसूयकेन, अनुनेयेन, अनुनयकोविदेन, क्लेशक्षमेण, प्रियसंभाषणेन च सह संधाय संभाषा विधीयते, इतरेण सह विगृह्य संभाषेत ।

श्रुतं, विज्ञानं, धारणं, प्रतिभानं, वचनशक्तिः, इति एतान् गुणान् श्रेयस्करानाहुः, । इमान्पुनर्दोषवतः, तद्यथा—कोपनत्वं, अवैशारद्यं, भीरुत्वं, अधारणत्वं, अनवहितत्वमिति ।

तत्र त्रिविधः परः संपद्यते प्रवरः, प्रत्यवरः, समो वा गुणविनिक्षेपतः ।

परिषत्तु खलु द्विविधा-ज्ञानवती, मूढपरिषच्च, सैव द्विविधा सती त्रिविधा-सुहृत्परिषत्, उदासीनपरिषत्, प्रतिनिविष्टपरिषच्चेति ।

इमानि तु खलु पदानि भिषग्वादमार्गज्ञानार्थमधिगम्यानि भवन्ति, तद्यथा-वादः, द्रव्यं, गुणः, कर्म, सामान्यं, विशेषः, समवायः, प्रतिज्ञा, स्थापना, प्रतिष्ठापना, हेतुः, दृष्टान्तः, उपनयः, निगमनं, उत्तरं, सिद्धान्तः, शब्दः, प्रत्यक्षं, अनुमानं, ऐतिह्यं, औपम्यं, संशयः, प्रयोजनं, सव्यभिचारं, जिज्ञासा, व्यवसायः, अर्थप्राप्तिः, संभवः, अनुयोज्यं, अननुयोज्यं, अननुयोगः, प्रत्यनुयोगः, वाक्यदोषः, वाक्यप्रशंसा, छलं, अहेतुः अतीतकालं, उपालम्भः, परिहारः, प्रतिज्ञाहानिः, अभ्यनुज्ञा, हेत्वन्तरं, अर्थान्तरं, निग्रहस्थानमिति ।

वादः—तत्र वादो नाम यत्परेण सह शास्त्रपूर्वकं विगृह्य कथयति । स द्विविधः संग्रहेण, जल्पो वितण्डा च ।

जल्पः—तत्र पक्षाश्रितयोर्वचनं जल्पः, यथा—एकस्य पक्षः पुनर्भवोऽस्तीति नास्तीत्यपरस्य, तौ च स्वस्वपक्षहेतुभिः स्वस्वपक्षं स्थापयतः, परपक्षमुद्भावयतः, एष जल्पः ।

वितण्डा—जल्पविपर्ययो वितण्डा । वितण्डा नाम परपक्षे दोषवचनमेव ।

### द्रव्यादिस्थापनान्ता उक्ताः

प्रतिष्ठापना—प्रतिष्ठापना नाम या तस्या एव परप्रतिज्ञाया विपरीतार्थ-स्थापना । यथा—"अनित्यः पुरुषः" इति प्रतिज्ञा, हेतुः "ऐन्द्रियकत्वात्"

इति दृष्टान्तः, "यथा घटः" इति उपनयः, "यथा घट ऐन्द्रियकः स चानित्यः तथा चायम्" इति निगमनम्, "तस्मादनित्यः" इति।

हेतुः—हेतुर्नामोपलब्धिकारणम्, तत् प्रत्यक्षम्, अनुमानम्, ऐतिह्यम्, औपम्यमिति।

दृष्टान्तः—दृष्टान्तो नाम यत्र मूर्खविदुषां बुद्धिसाम्यं यो वर्ण्यं वर्णयति। यथा—अग्निरुष्णः, द्रवमुदकं, स्थिरा पृथिवी, आदित्यः प्रकाशक इति। यथा आदित्यः प्रकाशकस्तथा सांख्यज्ञानं प्रकाशकमिति।

उपनयो निगमनं चोक्तम्।

उत्तरम्—उत्तरं नाम साधर्म्योपदिष्टे हेतौ वैधर्म्यवचनं, वैधर्म्योपदिष्टे वा हेतौ साधर्म्यवचनम्। यथा—हेतुसधर्माणो विकाराः, शीतकस्य हि व्याधेर्हेतुभिः साधर्म्यं हिमशिशिरवातसंस्पर्शाः, इति ब्रुवतः परो ब्रूयात्—हेतुविधर्माणो विकाराः। यथा—शरीरावयवानां दाहौष्ण्यकोथप्रपचने हेतुवैधर्म्यं हिमशिशिरवातसंस्पर्शा इति, एतत्सविपर्ययमुत्तरम्।

सिद्धान्तः—सिद्धान्तो नाम स यः परीक्षकैर्बहुविधं परीक्ष्य हेतुभिश्च साधयित्वा स्थाप्यते निर्णयः। स चतुर्विधः—सर्वतन्त्रसिद्धान्तः, प्रतितन्त्रसिद्धान्तः, अधिकरणसिद्धान्तः, अभ्युपगमसिद्धान्तश्चेति।

सर्वतन्त्रसिद्धान्तः—सर्वतन्त्रसिद्धान्तो नाम तस्मिंस्तस्मिन्सर्वस्मिंस्तन्त्रे तत्तत्प्रसिद्धं, यथा सन्ति निदानानि, सन्ति व्याधयः, सन्ति सिद्ध्युपायाः साध्यानामिति।

प्रतितन्त्रसिद्धान्तः—प्रतितन्त्रसिद्धान्तो नाम तस्मिंस्तस्मिन्नेकस्मिंस्तन्त्रे तत्तत्प्रसिद्धं, यथा—अन्यत्राष्टौ रसाः षडत्र, पञ्चेन्द्रियाण्यत्र षडिन्द्रियाण्यन्यत्र, वातादिकृताः सर्वे विकाराः यथाऽन्यत्र, अत्र वातादिकृता भूतकृताश्च।

अधिकरणसिद्धान्तः—अधिकरणसिद्धान्तो नाम स यस्मिन्नधिकरणे प्रस्तूयमाने सिद्धान्यन्यान्यप्यधिकरणानि भवन्ति, यथा—न मुक्तः कर्म आनुबन्धिकं कुरुते निस्पृहत्वात् इति प्रस्तुते सिद्धाः कर्मफलमोक्षपुरुषप्रेत्यभावा भवन्ति।

**अभ्युपगमसिद्धान्तः**—अभ्युपगमसिद्धान्तो नाम स यमर्थमसिद्धमपरीक्षितमनुपदिष्टमहेतुकं वा वादकालेऽभ्युपगच्छन्ति भिषजः. तद्यथा—द्रव्यं प्रधानमिति कृत्वा वक्ष्यामः, गुणाः प्रधानमिति कृत्वा वक्ष्यामः, वीर्यं प्रधानमिति कृत्वा वक्ष्यामः, इत्येवमादिः।

शब्दादिसंशयान्ता उक्ताः—

**प्रयोजनम्**—प्रयोजनं नाम यदर्थमारभ्यन्त आरंभाः, यथा—यद्यकालमृत्युरस्ति ततोऽहमात्मानमायुष्यैरुपचरिष्याम्यनायुष्याणि परिहरिष्यामि. कथं मामकालमृत्युः प्रसहेत, इति।

**सव्यभिचारम्**—सव्यभिचारं नाम यद्व्यभिचरणं यथा—भवेदिदमौषधमस्मिन्व्याधौ यौगिकमथवा नेति।

**जिज्ञासा**—जिज्ञासा नाम परीक्षा यथा—भेषजपरीक्षा उत्तरकालं ( भेषजं द्विविधं–चि० अ० १ पा० १ ) उपदेक्ष्यते।

**व्यवसायः**—व्यवसायो नाम निश्चयः यथा—वातिक एवायं व्याधिः, इदमेवास्य भेषजमिति।

अर्थप्राप्तिरुक्ता।

**संभवः**—यो यतः संभवति स तस्य संभवः, यथा—षड्धातवो गर्भस्य, व्याधेरहितं हितमारोग्यस्येति।

**अनुयोज्यम्**—अनुयोज्यं नाम यद्वाक्यं वाक्यदोषयुक्तं तत्, सामान्यतो व्याहृतेषु अर्थेषु वा विशेषग्रहणार्थं यद्वाक्यं तदप्यनुयोज्यं, यथा—संशोधनसाध्योऽयं व्याधिरित्युक्ते किं वमनसाध्योऽयं किंवा विरेचनसाध्य इत्यनुयुज्यते।

**अननुयोज्यम्**—अननुयोज्यं नाम अतो विपर्ययेण यथा—अयमसाध्यः।

**अनुयोगः**—अनुयोगो नाम स यत्तद्विद्यानां तद्विद्यैरेव सार्धं तन्त्रे तन्त्रैकदेशे वा प्रश्नः प्रश्नैकदेशो वा ज्ञानविज्ञानवचनप्रतिवचनपरीक्षार्थमादिश्यते यथा—नित्यः पुरुष इति प्रतिज्ञाते यत्परः को हेतुरित्याह—सोऽनुयोगः।

**प्रत्यनुयोगः**—प्रत्यनुयोगो नाम अनुयोगस्यानुयोगः, यथा—अस्यानुयोगस्य पुनः को हेतुरिति।

**वाक्यदोषः**—वाक्यदोषो नाम यथा खल्वस्मिन्नर्थे न्यूनम्, अधिकम्, अनर्थकम्, अपार्थकम्, विरुद्धं चेति, एतानि ह्यन्तरेण न प्रकृतोऽर्थः प्रणश्येत्।

न्यूनम्—प्रतिज्ञाहेतूदाहरणोपनयनिगमनानामन्यतमेनापि न्यूनं न्यूनं भवति।

यद्वा बहूपदिष्टहेतुकमेकेन हेतुना साध्यते तच्च न्यूनम्।

अधिकम्—अधिकं नाम यन्न्यूनविपरीतम्।

यद्वाऽऽयुर्वेदे भाष्यमाणे बार्हस्पत्यमौशनसमन्यद्वा यत्किञ्चिदप्रतिसंबद्धार्थमुच्यते।

यद्वा सम्बद्धार्थमपि द्विरभिधीयते तत्पुनरुक्तदोषत्वादधिकम्। तच्च पुनरुक्तं द्विविधम्, अर्थपुनरुक्तं, शब्दपुनरुक्तं च।

**अर्थपुनरुक्तम्**—यथा भेषजमौषधं साधनमिति।

**शब्दपुनरुक्तम्**—भेषजं भेषजमिति।

**अनर्थकम्**—अनर्थकं नाम यद्वचनमक्षरग्राममात्रमेव स्यात् पञ्चवर्गवन्न चार्थतो गृह्यते।

**अपार्थकम्**—अपार्थकं नाम यदर्थवच्च परस्परेणासंयुज्यमानार्थकं यथा—चक्र-नक्र-वंश-वज्र-निशाकरा इति।

**विरुद्धम्**—विरुद्धं नाम यद्दृष्टान्तसिद्धान्तसमयैर्विरुद्धं, तत्र पूर्वं दृष्टान्तसिद्धान्तावुक्तौ। समयः पुनस्त्रिधा भवति, यथा—आयुर्वैदिकसमयः, याज्ञिकसमयः, मोक्षशास्त्रिकसमयश्चेति।

**आयुर्वैदिकसमयः**—चतुष्पादं भेषजमिति।

**याज्ञिकसमयः**—आलभ्या यजमानैः पशव इति।

**मोक्षशास्त्रिकसमयः**—सर्वभूतेष्वहिंसेति। तत्र स्वसमयविपरीतमुच्यमानं विरुद्धं भवति।

**वाक्यप्रशंसा**—वाक्यप्रशंसा नाम यथा खल्वस्मिन्नर्थे त्वन्यूनम्, अनधिकम्, अर्थवत्, अनपार्थकम्, अविरुद्धम्, अधिगतपदार्थञ्चेति यत्तद्वाक्यमननुयोज्यमिति प्रशस्यते।

**छलम्**—छलं नाम परिशठमर्थाभासमनर्थकं वाग्वस्तुमात्रमेव। तद्द्विविधं वाक्छलं, सामान्यच्छलं च।

**वाक्छलम्**—यथा कश्चिद्ब्रूयात् नवतन्त्रोऽयं भिषगिति, अथ भिषग्ब्रूयात् नाहं नवतन्त्र एकतन्त्रोऽहमिति, परो ब्रूयात्—नाहं ब्रवीमि नव तन्त्राणि तवेति अपितु नवाभ्यस्तं ते तन्त्रमिति। भिषग्ब्रूयात् न मया नवाभ्यस्तं तन्त्रम्, अनेकधाऽभ्यस्तं मया तन्त्रमिति। एतद्वाक्छलम्।

**सामान्यच्छलम्**—यथा व्याधिप्रशमनायौषधमित्युक्ते परो ब्रूयात्—सत् सत्प्रशमनायेति किं नु भवानाह? सन् हि रोगः, सदौषधम्, यदि च सत् सत्प्रशमनाय भवति तत्र सन्कासः, सन्क्षयः, सत्सामान्यात्कासस्ते क्षयप्रशमनाय भविष्यतीति। एतत्सामान्यच्छलम्।

अहेतवो हेत्वाभासा उक्ताः।

**अतीतकालम्**—अतीतकालं नाम यत्पूर्वं वाच्यं तत्पश्चादुच्यते, तत्कालातीतत्वादग्राह्यं भवतीति। पूर्वं वा निग्रहप्राप्तमनिगृह्य परिगृह्य पक्षान्तरितं पश्चान्निगृहीते तत्तस्यातीतकालत्वान्निग्रहवचनमसमर्थं भवतीति।

**उपालम्भः**—उपालम्भो नाम हेतोर्दोषवचनं, यथा—पूर्वमहेतवो हेत्वाभासा व्याख्याताः।

**परिहारः**—परिहारो नाम तस्यैव दोषवचनस्य परिहरणं, यथा—नित्यमात्मनि शरीरस्थे जीवलिङ्गान्युपलभ्यन्ते, तस्य चापगमान्नोपलभ्यन्ते, तस्मादन्यः शरीरादात्मा नित्यश्चेति।

**प्रतिज्ञाहानिः**—प्रतिज्ञाहानिर्नाम सा पूर्वपरिगृहीतां प्रतिज्ञां पर्यनुयुक्तो यत्परित्यजति, यथा—प्राक् प्रतिज्ञां कृत्वा नित्यः पुरुष इति, पर्यनुयुक्तस्त्वाह—अनित्य इति।

**अभ्यनुज्ञा**—अभ्यनुज्ञा नाम सा य इष्टानिष्टाभ्युपगमः।

**हेत्वन्तरम्**—हेत्वन्तरं नाम प्रकृतहेतौ वाच्ये यद्विकृतहेतुमाह।

**अर्थान्तरम्**—अर्थान्तरं नाम एकस्मिन्वक्तव्येऽपरं यदाह, यथा—ज्वरलक्षणे वाच्ये प्रमेहलक्षणमाह।

निग्रहस्थानम्—निग्रहस्थानं नाम पराजयप्राप्तिः, तच्च त्रिरभिहितस्य वाक्यस्यापरिज्ञानं परिषदि विज्ञानवत्याम् ।

यद्वा अननुयोज्यस्यानुयोगोऽनुयोज्यस्य चाननुयोगः ।

प्रतिज्ञाहानिः, अभ्यनुज्ञा, कालातीतवचनम्, अहेतुः, न्यूनम्, अधिकम्, व्यर्थम्, अनर्थकम्, पुनरुक्तम्, विरुद्धम्, अर्थान्तरम्, च निग्रहस्थानम् ।

भगनाभिधराजदीक्षितात्मभुवा श्रीबलवन्तशर्मणा ।
रचितस्य पदार्थदर्शनस्य च खण्डोऽन्तमगात्तृतीयकः ॥

॥ इति सांख्यप्रक्रियानिरूपणम् ॥

इति द्वितीयः खण्डः

तद्विद्यसम्भाषा दो प्रकार की होती है सन्धायसंभाषा और विगृह्य-सम्भाषा।

ज्ञान, विज्ञान, वचन ( पूर्वपक्ष ) प्रतिवचन ( उत्तरपक्ष ) की शक्ति से सम्पन्न, क्रोधरहित, जिसकी विद्या विकृत नहीं, पर गुणोंमें दोषारोपण न करने वाले, अनुनय ( विनय ) में पण्डित, क्लेश को सहनेवाले तथा प्रियवाणी बोलनेवाले के साथ सन्धायसम्भाषा की जाती है, पूर्वोक्त से विपरीत गुण-सम्पन्न पुरुष के साथ विगृह्यसम्भाषा करे।

श्रुत ( शास्त्रज्ञान ) विज्ञान ( शास्त्रार्थज्ञान ) धारणा, प्रतिभा, वचन-शक्ति, जल्पक के ये गुण श्रेयस्कर हैं और ये दोषयुक्त हैं, जैसे—क्रुद्ध होजाना, पाण्डित्य न होना, भीरुता ( डरपोकपन ) धारणाशक्ति का न होना ( कण्ठस्थ न होना ) ध्यान न होना।

सम्भाष्य पुरुष कुछ एक गुणों की न्यूनाधिकता से तीन प्रकारके होते हैं, १. प्रवर ( श्रेष्ठ ) २. प्रत्यवर, ( कनिष्ठ वा हीन ), ३. सम।

परिषत् दो प्रकार की होती है १. ज्ञानवती, २. मूढ़परिषत्। यह दो प्रकार की परिषत् ही निम्न कारण-विभाग से तीन प्रकार की होती है, १. सुहृत्परिषत्, २. उदासीनपरिषत्, ३. प्रतिनिविष्टपरिषत्।

वाद के मार्ग को जानने के लिये इन पदों को जानलेना चाहिये। वाद, द्रव्य, गुण, कर्म, सामान्य, विशेष, समवाय, प्रतिज्ञा, स्थापना, प्रतिष्ठापना, हेतु, उपनय, निगमन, उत्तर, दृष्टान्त, सिद्धान्त, शब्द, प्रत्यक्ष, अनुमान, ऐतिह्य, उपमान, संशय, प्रयोजन, सव्यभिचार, जिज्ञासा, व्यवसाय, अर्थप्राप्ति, सम्भव, अनुयोज्य, अननुयोज्य, अनुयोग, प्रत्यनुयोग, वाक्यदोष, वाक्यप्रशंसा, छल, अहेतु, अतीतकाल, उपालम्भ, परिहार, प्रतिज्ञाहानि, अभ्यनुज्ञा, हेत्वन्तर, अर्थान्तर, निग्रहस्थान।

वाद—जो परस्पर शास्त्रपूर्वक विगृह्यसंभाषा होती है उसे वाद कहते हैं। यह वाद संक्षेप में दो प्रकार का है—१. जल्प २, वितण्डा।

जल्प—अपने अपने पक्ष को लेकर वादी प्रतिवादी का वचन जल्प कहाता है। जैसे एक का पक्ष 'पुनर्जन्म है' यह है। दूसरे का पक्ष 'पुनर्जन्म नहीं है' यह है। वे दोनों हेतुओं से अपने अपने पक्ष की स्थापना तथा दूसरे के पक्ष का प्रतिषेध करते हैं यह जल्प है।

वितण्डा—जल्प से विपरीत का नाम वितण्डा है। दूसरे के पक्ष में केवल मात्र दोष का ही कहना वितण्डा कहाता है। द्रव्य, गुण, कर्म, सामान्य, विशेष, समवाय, प्रतिज्ञा और स्थापना इन्हें अपने अपने लक्षणों द्वारा आगे कह चुके हैं।

प्रतिष्ठापना—दूसरे की प्रतिज्ञा से विपरीत साध्य की स्थापना करना प्रतिष्ठापना कहाती है, जैसे प्रथम स्थापना थी, पुरुष नित्य है। अब प्रतिष्ठापना होगी, पुरुष अनित्य है। हेतु इन्द्रियग्राह्य होने से, दृष्टान्त—जैसे घट इन्द्रियग्राह्य है और वह अनित्य है। उपनय-जैसे घट वैसे पुरुष। निगमन-अतएव पुरुष अनित्य है।

हेतु—ज्ञान के कारण वा साधन को हेतु कहते हैं। वह साधन प्रत्यक्ष, अनुमान, ऐतिह्य और उपमान हैं। उपनय और निगम स्थापना और प्रतिष्ठापना की व्याख्या में कह दिये गये हैं।

दृष्टान्त—जहां मूर्ख और विद्वानों की बुद्धि एकसमान हो वह दृष्टान्त कहाता है जो वर्णनीय वस्तु का वर्णन करता है। जैसे अग्नि उष्ण है। जल द्रव है। पृथिवी स्थिर है। सूर्य प्रकाशक है। वैसे सांख्य ज्ञान भी प्रकाशक है।

उत्तर—हेतु के साधर्म्य द्वारा उपदेश होने पर वैधर्म्य और वैधर्म्य द्वारा उपदेश होने पर साधर्म्य कहना उत्तर कहाता है। जैसे रोग हेतु के समानधर्मी होते हैं। शीतक रोग हेतु हिम शिशिरवात का स्पर्श आदि का समानधर्मी है इस प्रकार वादी के कहने पर प्रतिवादी कहे कि विकार हेतु के विधर्मी होते हैं। जैसे शरीर के अवयवों के दाह, उष्णता, कोथ ( सड़ना ) वा पकने में हिम शिशिर वातस्पर्श आदि हेतु की विषमता है, यह उत्तर है।

**सिद्धान्त**—परीक्षकों द्वारा बहुत प्रकार से परीक्षा किया जाकर हेतुओं से सिद्ध करके जो निर्णय स्थिर किया जाता है उसे सिद्धान्त कहते हैं। वह चार प्रकार का है। १. सर्वतन्त्रसिद्धान्त २. प्रतितन्त्रसिद्धान्त ३. अधिकरणसिद्धान्त ४. अभ्युपगमसिद्धान्त।

**सर्वतन्त्रसिद्धान्त**—जो सिद्धान्त सब शास्त्रों में प्रसिद्ध है वह सर्वतन्त्र-सिद्धान्त कहाता है। जैसे निदान है। रोग है। साध्य रोगों के सिद्धि के उपाय हैं।

**प्रतितन्त्रसिद्धान्त**—उस उस तन्त्र में जो जो प्रसिद्ध है वह वह प्रति-तन्त्रसिद्धान्त कहाता है। जैसे अन्यत्र आठ रस हैं, यहां छः रस हैं। इस तन्त्र में पांच इन्द्रियां हैं, अन्यत्र तन्त्र में छः इन्द्रियां हैं। जैसे इस शास्त्र में सब विकार वातादिजन्य है अन्यत्र तथाभूतज माने गये हैं।

**अधिकरणसिद्धान्त**—जिस विषय के चलते प्रकरण में उससे सम्बद्ध अन्यान्य अधिकरण सिद्ध हो जाते हैं वह अधिकरणसिद्धान्त कहाता है। जैसे मुक्त पुरुष निष्काम होने के कारण आनुबन्धिक कर्म नहीं करते। इस प्रस्ताव में कर्मों का फल होता है, मोक्ष होता है, पुरुष है और पुनर्जन्म होता है ये स्वयं ही सिद्ध हो जाते हैं।

**अभ्युपगमसिद्धान्त**—जिस असिद्ध, अपरीक्षित, अनुपदिष्ट और अहेतुक बात को चिकित्सक वाद के समय मान लेते हैं वह अभ्युपगम-सिद्धान्त कहाता है। जैसे द्रव्य को प्रधान मानकर कहेंगे, गुण को प्रधान मानकर कहेंगे, कर्म को प्रधान मानकर कहेंगे इत्यादि।

शब्दादि संशयान्त कह चुके हैं।

**प्रयोजन**—जिसके लिए कर्म किए जाते हैं वह प्रयोजन कहलाता है। जैसे यदि अकालमृत्यु है तो मैं अपने लिए आयुष्य आहार विहार का सेवन करूंगा। अनायुष्य भावों का त्याग करूँगा। मुझे अकालमृत्यु कैसे दबा सकती है?

**सव्यभिचार**—अनैकान्तिक होने को सव्यभिचार कहते हैं। जैसे यह औषध इस रोग में यौगिक होगा अथवा नहीं।

**जिज्ञासा**—परीक्षा को जिज्ञासा कहते हैं। जैसे भेषजपरीक्षा पश्चात् कही जायगी।

**व्यवसाय**--व्यवसाय निश्चय को कहते हैं। जैसे यह रोग ही है, यही इसकी औषध है।

अर्थप्राप्ति आगे कही है।

**संभव**--जो जहां से उत्पन्न होता है, वह उसका संभव कहाता है। जैसे छः धातु गर्भ के संभव हैं। अहित रोग का और हित आरोग्य का संभव है।

**अनुयोज्य**--जो वाक्य वाक्यदोष से युक्त हो वह अनुयोज्य कहाता है। अथवा सामान्यत: कहेगये अर्थोंमें विशेष ज्ञान के लिये जो वाक्य कहा जाता है वह अनुयोज्य होता है। जैसे रोग संशोधन-साध्य है यह कहनेपर विशेषज्ञान के लिये क्या वमनसे साध्य है अथवा विरेचन से साध्य है? यह अनुयोजन ( प्रश्न ) करना पड़ता है।

**अननुयोज्य**—अनुयोज्य से विपरीत लक्षणवाले वाक्य को अननुयोज्य कहते हैं। जैसे-वाक्यदोष रहित वाक्य अथवा "यह असाध्य है" ऐसा स्पष्ट वाक्य।

**अनुयोग**—तद्विद्य पुरुषों का तद्विद्य पुरुषों के साथ ज्ञान विज्ञान वचन और प्रतिवचन की परीक्षा के लिये सम्पूर्ण शास्त्र या शास्त्रके एकदेश में सम्पूर्ण प्रश्न अथवा प्रश्नका एक भाग पूछा जाता है वह अनुयोग कहाता है, जैसे—"पुरुष नित्य है" वादी के ऐसी प्रतिज्ञा करने पर "क्या हेतु है" ऐसा प्रतिवादी का प्रश्न अनुयोग कहाजाता है।

**प्रत्यनुयोग**--अनुयोग पर अनुयोग करना प्रत्यनुयोग कहा जाता है। जैसे-आपके इस प्रश्न का क्या हेतु है?

**वाक्यदोष**—किसी विषयमें न्यून, किसी विषयमें अधिक, किसी विषय में अनर्थक और किसी विषय में अपार्थक और किसी विषय में विरुद्ध होना ये वाक्यदोष हैं। इनके विना वाक्य का अर्थ नष्ट नहीं होता।

**न्यून**—प्रतिज्ञा, हेतु, उदाहरण, उपनय, और निगमन इन पाँचों में से किसी एकसे न्यून वाक्य न्यून कहाजाता है। वैसे बहुत हेतुओं से सिद्ध होसके ऐसे साध्य को एक हेतु से सिद्ध करना यह भी न्यून कहाजाता है। क्योंकि इन हेतुओं के विना प्रकृत अर्थ नष्ट होजाता है।

**अधिक**--आयुर्वेद विषयपरक वार्तालाप में बार्हस्पत्य, औशनस वा अन्य कोई भी असम्बद्ध वचन कहाजाय वह अधिक कहा जाता है।

अथवा प्रकृत अर्थ से सम्बद्ध वचन को दुबारा कहना, वह भी पुनरुक्त होने से अधिक कहा जाता है।

यह पुनरुक्त दो प्रकार का होता है—अर्थपुनरुक्त और शब्दपुनरुक्त।

**अर्थपुनरुक्त**--भेषज, औषध, साधन, इन तीनों शब्दों का एक अर्थ होने से एक साथ कहना अर्थपुनरुक्त है।

**शब्दपुनरुक्त**--भेषज, भेषज। एक ही शब्द को दुबारा कहना शब्द-पुनरुक्त है।

**अनर्थक**--जो वचन कखगघङ, चछजझञ, टठडढण, तथदधन, पफबभम, इन वर्णों के समान केवल अक्षरसमूहरूप हो तथा कोई अर्थ प्रकट न करता हो वह अनर्थक कहा जाता है।

**अपार्थक**--चक्र, नक्र, वंश, वज्र, निशाकर इनके समान जो वाक्य वा पद पृथक् पृथक् अर्थयुक्त होते हुए भी परस्पर असम्बद्ध हो वह अपार्थक कहा जाता है।

**विरुद्ध**--जो वाक्य दृष्टान्त, सिद्धान्त और समय से विरुद्ध हो वह विरुद्ध कहा जाता है। इनमें दृष्टान्त और सिद्धान्त आगे कह दिये हैं।

**समय** तीन प्रकार का है—आयुर्वैदिक समय, याज्ञिक समय और मोक्षशास्त्रिक समय।

**आयुर्वैदिक समय**—भेषज चतुष्पाद है।

**याज्ञिक समय**--यजमान पशुओं का आलभन करे।

**मोक्षशास्त्रिक समय**—सर्व प्राणियों में अहिंसा।

इनमें अपने अपने समय से विपरीत कथन विरुद्ध कहा जाता है।

**वाक्यप्रशंसा**—प्रकृत विषय में जो वाक्य न्यून, अधिक, अनर्थक, अपार्थक और विरुद्ध न हो एवं ज्ञातपदार्थ हो वह अननुयोज्य होने से प्रशस्त कहा जाता है।

**छल**—छलने के लिए प्रयुक्त, वस्तुतः अर्थरहित होते हुये भी अर्थसहितता का आभास करानेवाला वाक्छल कहा जाता है।

यह दो प्रकार का है—वाक्छल और सामान्यच्छल।

**वाक्छल**—जैसे कोई कहे यह वैद्य नवतन्त्र–नया ही शास्त्राभ्यास कियाहुआ है, तब वैद्य कहे मैं नवतन्त्र–नौसंख्यक शास्त्रवाला–नहीं, एकतन्त्र–एकशास्त्रवाला हूँ, फिर दूसरा कहता है तुम्हारे नौ शास्त्र हैं ऐसा मैं नहीं कहता किन्तु तुम्हारा शास्त्र नवाभ्यस्त—नया ही पढ़ा हुआ है। तब फिर वैद्य कहे मैंने शास्त्र का नौ वार अभ्यास नहीं किया किन्तु अनेक वार किया है। यह वाक्छल हुआ।

**सामान्यच्छल**—औषध रोगों को शान्त करता है, यह कहने पर दूसरा कहे कि क्या आपने यह कहा कि सत् सत् को शान्त करता है, रोग सत् है और औषध भी सत् है। यदि सत् सत् को शान्त करता है तो कास रोग सत् है क्षयरोग भी सत् है सत् सामान्य से तुम्हारे मन में कास रोग से क्षय रोग की शान्ति हो जायगी। यह सामान्यच्छल हुआ।

**अहेतु**--पहले जो हेत्वाभास कहे हैं वे अहेतु हैं।

**अतीतकाल**—जो पूर्व कहाजाना चाहिये वह पीछे कहाजाय उसे अतीतकाल कहते हैं। वह काल व्यतीत होजाने से अग्राह्य होता है।

अथवा निग्रहस्थानमें आयेहुए प्रतिपक्षी को पूर्व छोड़करके पीछे जब वह पक्षान्तर का आश्रय करले तब निग्रह करना यह वचन कालातीत होने से उसके निग्रह में समर्थ नहीं होता।

**उपालम्भ**—हेतु के दोषों का कथन। जैसे प्रथम अहेतु–हेत्वाभास कहे गये हैं।

परिहार—उसी पहिले कहे हुए दोष-कथन का निराकरण करना परिहार है। जैसे—आत्मा शरीर में रहता है वहां तक जीवलिङ्ग अवश्य दिखाई देते हैं, तथा आत्मा शरीर से निकल जाता है तब नहीं दिखाई देते हैं, अतः आत्मा शरीर से भिन्न और नित्य है। प्रकरणसम अहेतु में कहे दोष का यहां परिहार किया है।

प्रतिज्ञाहानि—प्रथम की हुई प्रतिज्ञा को पर्यनुयोग होने पर छोड़देना प्रतिज्ञाहानि है। जैसे—पुरुष नित्य है ऐसी प्रथम प्रतिज्ञा करके जब प्रतिवादी ने पर्यनुयोग किया तब झट बदल कर पुरुष अनित्य है ऐसा कहना यह प्रतिज्ञाहानि है।

अभ्यनुज्ञा—इष्ट-परपक्ष के दोष, एवं अनिष्ट-स्वपक्ष के दोष-को स्वीकार करना अभ्यनुज्ञा है।

हेत्वन्तर—प्रकृति का हेतु वाच्य हो किन्तु उसको न कहकर विकृतिहेतु का कथन हेत्वन्तर कहा जाता है।

अर्थान्तर—कहना हो एक और कहे दूसरा वह अर्थान्तर होता है, जैसे कहना हो ज्वरलक्षण और कहे प्रमेहलक्षण, यह अर्थान्तर है।

निग्रहस्थान—पराजयप्राप्ति निग्रहस्थान है। विज्ञानवान् परिषद् में तीन वार कहे वाक्य को न जानना निग्रहस्थान होता है, अथवा अननुयोज्य का अनुयोग और अनुयोज्य का अननुयोग भी निग्रहस्थान है तथा प्रतिज्ञाहानि, अभ्यनुज्ञा, कालातीतवचन, अहेतु, न्यून, अधिक, व्यर्थ, अनर्थक, पुनरुक्त, विरुद्ध, हेत्वन्तर, अर्थान्तर ये भी निग्रहस्थान हैं।

समाप्तमिदमायुर्वेदीयपदार्थविज्ञानम्